संस्कृत प्रचार पुस्तक माला सं०-१५

# बाल-निबन्ध-माला

[ संस्कृत के प्रारम्भिक विद्यार्थियों के लिए अत्यन्त सरल, सरस, ललित तथा सन्धि एवं समास की जटिलता से निर्मुक्त संस्कृत में लिखे हुए परीक्षोपयोगी निबन्धों की अद्वितीय पुस्तक ]

लेखक :

**वासुदेवद्विवेदी शास्त्री**

( संस्कृतप्रचार-पुस्तकमाला--सम्पादकः )

**सार्वभौम संस्कृत प्रचार कार्यालय**

**वाराणसी**

प्रकाशक :
सार्वभौम संस्कृत प्रचार कार्यालय
डी. ३८।११० हौजकटोरा
वाराणसी



षष्ठ आवृत्ति : दो हजार
मूल्य : २–५०

मुद्रक :
देववाणी प्रेस
स्टेशन रोड, बड़ी मलदहिया
वाराणसी

# विनीत अभ्यर्थना

संस्कृत की पाठ्य-पुस्तकों में प्रारम्भिक कक्षाओं के विद्यार्थियों के लिए उपयोगी पुस्तकों का नितान्त अभाव है। गद्य, पद्य, नाटक, कथा, इतिहास एवं निबन्ध आदि विषयों में से किसी विषय पर संस्कृत में ऐसी पुस्तकें नहीं हैं जो अत्यन्त सरल, ललित एवं आकर्षक हों तथा जिनकी सहायता से विद्यार्थी बिना विशेष परिश्रम के ही, मनोरंजन के साथ, अत्यल्प समय में संस्कृत का आवश्यक ज्ञान प्राप्त कर सकें। इसी अभाव को दूर करने के लिए कार्यालय द्वारा अनेक विषयों पर बालोपयोगी पुस्तकमाला के प्रकाशन का निश्चय किया गया है। तदनुसार ही यह पुस्तक प्रकाशित की जा रही है और इसके पूर्व इसी ढंग की दो और पुस्तकें प्रकाशित हो चुकी हैं।

प्रस्तुत पुस्तक में कुछ परीक्षोपयोगी विषयों पर संस्कृत में लिखे हुए छोटे-छोटे निबन्ध प्रकाशित किये जा रहे हैं। इसका प्रधान उद्देश्य निबन्ध लिखने की शिक्षा देने के अतिरिक्त संस्कृत के प्रारम्भिक विद्यार्थियों को शीघ्रता और सरलता के साथ संस्कृत सिखाने में सहायता पहुँचाना है। इसीलिए यह पुस्तक अत्यन्त सरल एवं सुबोध भाषा में लिखी गई है और यथासम्भव सन्धि और समास की परम्परागत जटिलता से अत्यन्त मुक्त रक्खी गई है। साथ ही इस पुस्तक में ऐसे शब्दों और धातुओं का प्रयोग किया गया है जो सर्वसाधारण में बहुत प्रचलित हैं। फिर भी यदि कोई शब्द विद्यार्थियों के लिए कठिन प्रतीत हुआ है तो उसका टिप्पणी में हिन्दी में अर्थ भी दे दिया गया है। थोड़े से शब्दरूपों तथा धातुरूपों को जानने वाला व्यक्ति भी यदि इस पुस्तक को २-३ बार पढ़ जाय तो इसमें सन्देह नहीं कि

वह बहुत अल्प समय में ही संस्कृत में लिखने-पढ़ने तथा बोलने-समझने की शक्ति प्राप्त कर सकता है।

जो विद्यार्थी अथवा संस्कृत सीखने के इच्छुक प्रौढ़ व्यक्ति कम समय में सरलता और मनोरंजन के साथ संस्कृत सीख लेना चाहते हैं उनसे हमारी विनीत प्रार्थना है कि वे कार्यालय द्वारा प्रकाशित सुगम शब्द-रूपावली, सुगम धातु-रूपावली, बाल-संस्कृतम् तथा बालकवितावली को २०-२५ दिनों में पढ़कर इस पुस्तक को २-३ बार बाँच जायँ। ऐसा करने से वे देखेंगे कि दो महीने के भीतर ही उन्हें संस्कृत सीखने में आश्चर्यजनक लाभ होगा तथा उनका उत्साह दूना—चौगुना हो जायगा। संस्कृत-शिक्षण शैली की वर्तमान कठिनता एवं नीरसता से परिचित एवं पराभूत व्यक्ति इस पद्धति की परीक्षा करें यह हमारी विनीत अभ्यर्थना है।

आशा है, संस्कृत-प्रचार के इच्छुक व्यक्ति, विद्यार्थी एवं अध्यापक इस पुस्तक का पठन-पाठन में उपयोग कर और इससे लाभ उठा कर इस परिश्रम को सफल बनायेंगे तथा अन्य संस्कृत सीखने के इच्छुक व्यक्तियों के लिए भी पथप्रदर्शक बनकर संस्कृत-प्रचार के इस पवित्र कार्य में हमें सक्रिय सहयोग देने की कृपा करेंगे।

माघ अमावस्या २०३५ वि०<br>वाराणसी

विनीत<br>**लेखक**

# विषय-सूची

---

## एक आवश्यक निवेदन

बालोपयोगी पुस्तकमाला की समस्त पुस्तकों को सरलता को दृष्टि से सन्धिविहीन पदों में ही लिखने का निश्चय किया गया है। परन्तु इस पुस्तक में यह त्रुटि रह गई है कि एक ही वाक्य में कहीं तो सन्धि कर दी गई है और कहीं नहीं भी को गई है। यह त्रुटि इसके अग्रिम संस्करण तथा अन्य पुस्तकों में नहीं रहेगी ऐसी आशा है। अतः विद्यार्थी सन्धियों पर ध्यान न देकर केवल संस्कृत सीखने की दृष्टि से ही इसका अध्ययन करेंगे यह विनीत निवेदन है।

विनीत

**लेखक**

वाग्देवतायै नमः

# बाल-निबन्ध-माला

## १—ईश्वरवन्दना

ईश्वरः संसारस्य सृष्टिकर्ता अस्ति। स एव सूर्यं सृजति[1], स एव चन्द्रं सृजति। स एव ग्रहान् सृजति, स एव नक्षत्राणि सृजति। स एव पशून् सृजति, स एव पक्षिणः सृजति। स एव वृक्षान् सृजति, स एव वनस्पतीन् सृजति। स एव नरान् सृजति, स एव नारीः सृजति। सर्वं स एव सृजति।

ईश्वरः सर्वव्यापकः अस्ति। स सर्वत्र अस्ति। स जले अस्ति, स्थले अस्ति। आकाशे अस्ति, पाताले अस्ति। पशौ अस्ति, पक्षिणि अस्ति। वृक्षे अस्ति, वनस्पतौ अस्ति। स कणे कणे अस्ति, स तृणे तृणे अस्ति। स एव अग्रे अस्ति, स एव पश्चात् अस्ति। स एव उपरि अस्ति, स एव नीचैः अस्ति। स एव वामे अस्ति स एव दक्षिणे अस्ति। स सर्वत्र अस्ति।

ईश्वरः सर्वशक्तिमान् अस्ति। तस्मिन् सर्वाः शक्तयः सन्ति। स रचयितुं शक्नोति, नाशयितुं शक्नोति। उत्थापयितुं[2] शक्नोति, पातयितुं[3] शक्नोति। दातुं शक्नोति, ग्रहीतुं शक्नोति। मारयितुं शक्नोति, जीवयितुं शक्नोति। विस्तारयितुं शक्नोति, संहर्तुं[4] शक्नोति। सर्वं कर्तुं शक्नोति।

---

१—पैदा करता है। २—उठाने को। ३—गिराने को। ४—संहार करने को।

ईश्वरस्य अनेकानि अद्भुतानि च रूपाणि सन्ति । स निराकारः अपि अस्ति, साकारः अपि अस्ति । निर्गुणः अपि अस्ति, सगुणः अपि अस्ति । स्थूलः अपि अस्ति, सूक्ष्मः अपि अस्ति । महीयान्[५] अपि अस्ति, अणीयान्[६] अपि अस्ति । सः अनादिः अस्ति । सः अनन्तः अस्ति । सः अनेकरूपः अस्ति ।

स एव ब्रह्मरूपेण जगतः निर्माणं करोति । स एव विष्णुरूपेण जगतः पालनं करोति । स एव शिवरूपेण जगतः संहारं करोति । स एव वायुरूपेण वाति[७] । स एव इन्द्ररूपेण वर्षति । स एव सूर्यरूपेण प्रकाशते । स एव अग्निरूपेण ज्वलति । इदं सर्वं जगत् ईश्वरस्य एव रूपं वर्तते । ततः भिन्नं किमपि नास्ति ।

यथा ईश्वरस्य अनेकानि रूपाणि सन्ति तथैव तस्य अनेकानि नामानि अपि सन्ति । ब्रह्म, परमात्मा, परमेश्वरः जगदीश्वरः, ओङ्कारः इत्यादीनि तस्य अनन्तानि नामानि सन्ति । स एव अरबीभाषायां अल्ला, पारसीभाषायां खुदा तथा अंग्रेजीभाषायां गॉड इति कथ्यते। एक एव ईश्वरः भिन्न-भिन्न-नामभिः आहूयते[८], भिन्न-भिन्न-स्थानेषु च भिन्न-भिन्न-पद्धतिभिः पूज्यते ।

ईश्वरः महान् दयालुः अस्ति । स दीनानां पालकः अस्ति । अनाथानां सहायकः अस्ति । पतितानां समुद्धारकः अस्ति ।

अत एव ईश्वरस्य सर्वैः जनैः वन्दना कर्तव्या तथा इयं प्रार्थना कर्तव्या यत्—

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ॥**

———

५–बहुत बड़ा । ६–बहुत छोटा । ७–बहता है । ८–पुकारा जाता है ।

## २—भूमिः

यस्मिन् लोके वयं निवसामः स भूलोकः कथ्यते[1]। अस्य भूलोकस्य आधारः भूमिः एव अस्ति। भूमेः द्वौ भागौ वर्तेते—एकः जलभागः तथा द्वितीयः स्थलभागः। यस्मिन् भागे जलं वर्तते स जलभागः कथ्यते—यथा सरितः[2] समुद्राश्च। यस्मिन् भागे जनाः निवसन्ति स स्थलभागः कथ्यते।

भूमिः अस्माकं कृते महान् उपकारी पदार्थः अस्ति। भूमौ वयं भवामः, भूमौ वयं निवसामः। भूमौ वयं चलामः, भूमौ वयं तिष्ठामः। भूमौ वयं स्वपिमः, भूमौ वयं जागृमः। भूमौ वयं हसामः, भूमौ वयं नन्दामः। भूमौ वयं जीवामः तथा अन्ते भूमेः एव शरणं व्रजामः।

भूमौ अन्नानि उत्पद्यन्ते यानि वयं भक्षयामः। भूमौ जलं लभ्यते यद् वयं पिबामः। भूमौ भवनानि निर्मीयन्ते[3] येषु वयं निवसामः। भूमौ गजा अश्वाश्च भवन्ति यान् वयम् आरोहामः[4]। भूमौ एव तानि सर्वाणि वस्तूनि भवन्ति येभ्यः वयं सुखं शान्तिं च प्राप्नुमः[5]। अतएव भूमिः वसुधा वसुन्धरा च उच्यते।[6]

भूमेः महत्त्वम् अवर्णनीयम् अस्ति। अस्या गौरवम् अतुलनीयम् अस्ति। भूमिः जन्मदात्री अस्ति। भूमिः जीवनदात्री अस्ति। भूमिः अन्नदात्री अस्ति। भूमिः वस्त्रदात्री अस्ति। भूमिः सर्वदात्री अस्ति।

---

१—कहा जाता है। २—नदियाँ। ३—बनाये जाते हैं। ४—चढ़ते हैं। ५—पाते हैं। ६—कही जाती है।

अतएव अस्याः सेवा, सदुपयोगः, संरक्षणं च सर्वेषां भूमिवासिनां परमं कर्तव्यं वर्तते।

---

## ३—सूर्यः

सूर्यः एकः तेजोमयः पदार्थः अस्ति। अयं गोलाकारः भवति। सूर्यः पृथिव्याः अपि महान् अस्ति परं दर्शने लघुः प्रतिभाति[१]।

सूर्यः प्रातःकाले पूर्वदिशायाम् उदेति[२]। अयं सायङ्काले पश्चिमदिशायाम् अस्तं गच्छति। एवं प्रतिदिनं सूर्यः उदेति प्रतिदिनं च अस्तं गच्छति।

सूर्यः महान् उपकारकः पदार्थः अस्ति। यदा सूर्यः उदेति तदा संसारस्य अन्धकारः नश्यति। प्रभातं जायते। सर्वे प्राणिनः जाग्रति। सर्वेषु नवीनं चैतन्यं समायाति[३]। सर्वे स्व-स्व-कर्मणि संलग्ना भवन्ति। अन्यच्च—सूर्येण एव दिनस्य रात्रेश्च विभागः भवति। सूर्येण एव ऋतुपरिवर्तनं भवति। सूर्यद्वारा एव कालस्य ज्ञानं जायते।

सूर्यस्य किरणेषु जीवनदायिनी शक्तिः अस्ति। सूर्यस्य किरणैः कुसुमानि विकसन्ति[४]। सूर्यस्य किरणैः अंकुराणि उद्गच्छन्ति[५]। सूर्यस्य किरणैः शस्यानि वर्द्धन्ते। सूर्यस्य किरणैः फलानि पच्यन्ते[६]। सर्वे पदार्थाः सूर्यस्य किरणैः जीवनं गृह्णन्ति, पोषणं प्राप्नुवन्ति, वृद्धिं च गच्छन्ति।

---

१—मालूम पड़ता है। २—उगता है। ३—आ जाता है। ४—खिलते हैं। ५—उगते हैं। ६—पकते हैं।

सूर्यस्य किरणेषु आरोग्यदायिनी अपि शक्तिः अस्ति। सूर्यस्य किरणैः अनेके रोगा नश्यन्ति। सूर्यस्य किरणैः जलं वायुश्च विशुद्धौ भवतः। सूर्यस्य किरणैः रोगजनकाः कीटाणवः म्रियन्ते[७]। सूर्यनमस्कारेण स्वास्थ्यं सुन्दरं तिष्ठति। सूर्योपस्थानेन अनेके लाभाः भवन्ति। किमधिकम्[८]। सूर्यस्य एव कृपया जगत् जीवति वर्द्धते च। अत एव वेदे लिखितं वर्तते—

**सूर्य आत्मा जगतः तस्थुषश्च।**

---

## ४—अन्नम्

यत् अद्यते[१] तत् अन्नं कथ्यते। अन्नं बहुविधं भवति। यथा—धान्यं, गोधूमः, जवः, कोद्रवः, आढकी, कलायः, मुद्गः, माषः, मकायः, मडकः, यावनालश्चेत्यादयः।

अन्नं जीवनाय अति आवश्यकं वस्तु अस्ति। अन्नेन एव सर्वे जनाः जीवन्ति। अन्नं विना कोऽपि जीवितुं न शक्नोति। अनेके पशवः तथा पक्षिणः अपि अन्नमेव उपजीवन्ति।

एभिः एव अन्नैः नानाविधानि खाद्यवस्तूनि निर्मीयन्ते[२]। धान्येन, कोद्रवेण, श्यामाकेन च ओदनं पच्यते[३]। गोधूमेन, जवेन, कलायेन च रोटिका निर्मीयते। आढक्या, चणकेन, मुद्गेन माषेण च दालिः निर्मीयते। गोधूमस्य पिष्टकेन अपूपा

---

७—मरते हैं। ८—अधिक कहाँ तक कहा जाय।

१—खाया जाता है। २—बनाये जाते हैं। ३—पकता है।

अपि पच्यन्ते। चणकस्य चूर्णेन वटका विरच्यन्ते[४]। एभिः एव अन्नैः नानाविधानि मोदकानि निर्मीयन्ते।

उपरि लिखितानि खाद्यवस्तूनि सर्वत्र प्रसिद्धानि सन्ति। परन्तु एतदतिरिक्तं चिपिटान्नं[५] तथा सक्तुः[६] इति द्विविधम् अन्यदपि खाद्यं क्वचित्-क्वचित् प्रसिद्धं वर्तते। अनयोः चिपिटान्नं धान्येन निर्मीयते तथा सक्तुश्च चणकेन मकायेन[७] जवेन च। केषुचित् प्रदेशेषु अनयोः खाद्ययोः महान् प्रचारः अस्ति। निर्धनाः जनाः प्रायेण सक्तुभिः जीवनं यापयन्ति[८]।

अन्नं विना जीवनं सर्वथा असम्भवं वर्तते। यदि एकस्मिन् दिने अन्नं न लभ्यते तदा जनाः निर्बला निर्जीवाश्च भवन्ति। अन्नं विना न गानं रोचते न वाद्यम्। न कीर्तनं रोचते न भजनम्। न पठनं रोचते न लेखनम्। न हासः रोचते न परिहासः। न क्रीडा रोचते न कौतुकम्। न पूजा रोचते न पाठः। सर्वं कार्यं तदैव रोचते यदा उदरम्[९] अन्नेन परिपूर्णं भवति, भरितं भवति।

अतएव सर्वैः अन्नस्य उपार्जनं रक्षणं च कर्तव्यम्। इदानीं भारते जनसंख्या दिने दिने वर्द्धमाना[१०] एव विलोक्यते। अतः सम्प्रति भारतीयैः जनैः अन्नसम्वर्द्धने विशेषरूपेण ध्यानं दातव्यम्।

———

४—बनाये जाते हैं। ५—चिउड़ा। ६—सत्तू। ७—मकई से। ८—बिताते हैं। ९—पेट। १०—बढ़ती हुई।

## ५—वस्त्रम्

वस्त्रं मनुष्याणां कृते एकं परमावश्यकं वस्तु अस्ति। वस्त्रेण शरीरं आच्छाद्यते[1]। वस्त्रेण गुप्तानि अङ्गानि गोप्यन्ते[2]। वस्त्रेण शरीरस्य शोभा भवति। वस्त्रं सभ्यतायाः चिह्नं अस्ति। सुन्दरैः वस्त्रैः समाजे सम्मानः भवति। अतएव मानवसमाजस्य कृते वस्त्राणां महती उपयोगिता वर्तते।

वस्त्राणि नानाविधैः सूत्रैः निर्मीयन्ते। कानिचित् कर्पासस्य[3] सूत्रैः निर्मीयन्ते। कानिचित् ऊर्णासूत्रैः[4] निर्मीयन्ते। कानिचित् कृमिजैः[5] सूत्रैः निर्मीयन्ते। कानिचित् सणसूत्रैः[6] निर्मीयन्ते। कानिचित् च अन्यैः सूत्रैः।

एषु कर्पासस्य वस्त्राणि समर्घाणि[7] भवन्ति। अन्यानि वस्त्राणि च महर्घाणि[8] भवन्ति। अतएव सर्वे जना अधिकतया कर्पासस्य एव वस्त्राणि परिदधते[9]।

वस्त्रैः बहुविधानि परिधानानि[10] निर्मीयन्ते। धौतवस्त्रं[11] निर्मीयते, शाटी[12] निर्मीयते। कञ्चुकं[13] निर्मीयते, कूर्पासकं[14] निर्मीयते। दुकूलं[15] निर्मीयते, अङ्गप्रोञ्छनं[16] निर्मीयते। अङ्गरक्षकं[17] निर्मीयते, टोपिका निर्मीयते। आस्तरणं[18] निर्मीयते, आच्छादनं[19] निर्मीयते। उपानत्[20] निर्मीयते,

१—ढँका जाता है। २—तोपे जाते हैं। ३—कपास के। ४—ऊन के सूतों से। ५—कीड़ों से उत्पन्न (सूतों से)। ६—सन के सूतों से। ७—सस्ते। ८—महँगे। ९—पहिनते हैं। १०—पहनावे। ११—धोती। १२—साड़ी। १३—कुर्ता। १४—चोली। १५—दुपट्टा। १६—अगौंछो। १७—अंगरखा। १८—बिछौना। १९—ओढ़ना। २०—जूता।

छत्रं[२१] निर्मीयते। वितानं[२२] निर्मीयते, पटकुटी[२३] निर्मीयते। एवं प्रकारेण वस्त्रद्वारा नानाविधानि परिधानानि आवश्यकवस्तूनि च निर्मीयन्ते।

---

## ६—फलानि

फलानि भक्ष्यवस्तूनि[१] सन्ति। इमानि वृक्षेभ्यः उत्पद्यन्ते। कानिचित् फलानि लताभ्यः अपि जायन्ते।

फलानां अनेका जातयः सन्ति। यथा—आम्रम्, मधूकम्[२] जम्बूफलम्, पेरुकम्[३], पनसम्[४], कर्कटी[५], कालिङ्गञ्चेत्यादयः[६]। एकस्यां अपि जातौ अनेके भेदाः भवन्ति। यथा आम्रस्य बीजू, कलमी, मालदह, लँगड़ा, सेनुरिया प्रभृतयः भेदाः।

रूपभेदेन फलानि बहुविधानि भवन्ति। आम्रम्, जम्बूफलम्, बदरीफलं[७] चेत्यादीनि किञ्चित् लम्बानि भवन्ति। निम्बूकम्, दाडिमम्[८], लकुचञ्चेत्यादीनि[९] गोलाकाराणि भवन्ति। फलेषु पनसं सर्वेभ्यः विशालं लम्बं च भवति।

रसभेदेन अपि फलानि विविधानि भवन्ति। कानिचित् मधुराणि भवन्ति। यथा—आम्रम्। कानिचित् कषायाणि[१०]

---

२१—छत्ता। २२—सामियाना। २३—रावीट।

१—खाने योग्य पदार्थ। २—महुआ। ३—अमरूद। ४—कटहल। ५—ककड़ी। ६—कालमी। ७—बैर। ८—अनार। ९—बड़हर। १०—कसैले।

भवन्ति। यथा—आमलकम्[११]। कानिचित् अम्लानि भवन्ति। यथा—आम्रातकम्[१२] इम्लिका[१३] निम्बूकञ्च।

फलानां गुणा अपि विभिन्ना भवन्ति। केचन हानिकरा भवन्ति केचन लाभकराश्च।

इमानि फलानि विभिन्नकालेषु पच्यन्ते[१४]। कानिचित् फलानि ग्रीष्मे, कानिचित् फलानि वर्षासु, तथा कानिचित् अन्य-समयेषु पच्यन्ते। कानिचित् फलानि तु द्वादशसु अपि मासेषु पच्यन्ते।

फलानां विविधैः प्रकारैः उपयोगः क्रियते। कानिचित् फलानि भक्ष्यन्ते[१]। कानिचित् फलानि चूष्यन्ते[२]। कैश्चित् फलैः लेह्यं[३] सन्धानं[४] च निर्मीयते[५]। केषाञ्चित् फलानाम् औषधार्थे उपयोगः भवति। केषाञ्चित् शाकम् अपि अति स्वादिष्ठं भवति। केचन निर्धनाः जनास्तु अन्नाभावे फलैः एव द्वित्राणि दिनानि यापयन्ति[६]।

उपरि लिखितेभ्यः फलेभ्यः भिन्नानि अपि कानिचित् फलानि भवन्ति यानि श्रेष्ठफलानि मन्यन्ते। यथा—नारिकेलम्[७], द्राक्षा[८] शुष्कखर्जूरम्[९], निकोचकम्[१०] दाडिमम्[११], नारङ्गश्चेत्यादीनि[१२]। इमानि फलानि विशेषरूपेण स्वास्थ्यकराणि, बलवर्द्धकानि रोगादिषु च उपयोगीनि भवन्ति।

एवं फलानि अस्माकं कृते बहुलाभकराणि भवन्ति।

———

११—अँवरा। १२—अमड़ा। १३—इमली। १४—पकते हैं।

१—खाये जाते हैं। २—चूसे जाते हैं। ३—चटनी। ४—अँचार। ५—बनाया जाता है। ६—बिताते हैं। ७—नारियल। ८—दाख। ९—छुहाड़ा। १०—पिस्ता। ११—अनार। १२—नारंगी।

## ७—पशुः

पशुः एका प्राणिनां जातिः अस्ति। सर्वे पशवः चतुष्पदाः[1] स्तनपायिनश्च[2] भवन्ति। सर्वेषां पशूनां लघु महत् वा पुच्छम् अपि भवति। मनुष्याः इव पशवः अपि गर्भात् उत्पद्यन्ते।

संसारे पशूनाम् अनेकाः जातयः सन्ति। सर्वेषां स्वरूपाणि, गुणाः, स्वभावाश्च भिन्न-भिन्नाः भवन्ति। एतेषां ध्वनयः अपि परस्परं विलक्षणाः भवन्ति।

पशुषु केचन वन्याः[3] भवन्ति, केचन ग्रामवासिनः। केचन पशवः जलचरा अपि भवन्ति। सिंह-व्याघ्रादयः वन्याः सन्ति। गो-महिष्यादयः[4] ग्रामवासिनः सन्ति। नक्र-मकरादयः[5] जलचराः पशवः सन्ति।

एषु वन्या पशवः प्रायेण भयानकाः तथा हिंसकाः भवन्ति। ते वनेषु विचरन्ति तथा दुर्बलान् जीवान् मारयित्वा खादन्ति। जलचराः जीवाः जले एव सदा निवसन्ति। तेषु अपि सबलाः निर्बलान् जीवान् भक्षयन्ति।

एते वन्याः जलचराश्च जीवाः मनुष्याणां कृते प्रायेण हानिकराः एव भवन्ति। एषु केचन एव कश्चित् उपकारं कुर्वन्ति। परन्तु ग्रामीणाः पशवः मनुष्यसमाजस्य कृते अतीव आवश्यकाः तथा उपयोगिनश्च भवन्ति।

ग्राम्येषु पशुषु गौः दुग्धं ददाति बलीवर्दान्[6] च जनयति[7]।

---

१—चौपाये। २—स्तन पीने वाले। ६—जंगली। ४—गाय, भैंस वगैरह। ५—नाम मगर वगैरह। ६—बैलों को। ७—पैदा करती है।

बलीवर्दैः अस्माकं कृषिः जायते। महिषी प्रभूतं[८] दुग्धं तथा दधि ददाति। महिषाः[९] शकटानि[१०] वहन्ति हलं च चालयन्ति। गजाः अश्वाः उष्ट्राश्च वाहनकार्यं कुर्वन्ति। अश्वाः तथा उष्ट्राः भारम् अपि वहन्ति। गर्दभा[११] रजकानां[१२] कृते[१३] बहु उपयोगिनः भवन्ति। एते प्रभूतं वस्त्रभारं वहन्ति। अजा[१४] अति आरोग्यकरं दुग्धं ददाति। मेषाणां[१५] बालैः कम्बलाः निर्मीयन्ते। कुक्कुराः गृहाणां रक्षां कुर्वन्ति। बिडालाः मूषकेभ्यः भयं निवारयन्ति।

बहवः जनाः एषां पशूनां व्यापारम् अपि कुर्वन्ति तेन च बहु धनम् उपार्जयन्ति। एवं ग्राम्यपशूनां मानवसमाजे महती उपयोगिता वर्तते। वन्यपशवः व्याघ्रमृगादयश्च स्वचर्मादिना बहूनाम् उपकारं कुर्वन्ति।

---

## ८—वसन्त ऋतुः

भारते एकस्मिन् वर्षे षट्[१] ऋतवः भवन्ति। द्वयोः द्वयोः मासयोः एकः ऋतुः भवति। तत्र चैत्रवैशाखौ वसन्तो भवति। ज्येष्ठः आषाढश्च ग्रीष्मो भवति। श्रावण-भाद्रपदौ च वर्षा उच्यन्ते। आश्विन[२]-कार्तिकौ शरद् भवति। आग्रहायणः[३] पौषश्च हेमन्तः कथ्यते तथा माघः फाल्गुनश्च शिशिरः भवति। एवं प्रकारेण एकस्मिन् वर्षे षड् ऋतवः भवन्ति।

एषु ऋतुषु वसन्त ऋतुः प्रथम ऋतुः अस्ति। अयं ऋतुः

---

८—बहुत। ९—भैंसे। १०—गाड़ी, छकड़ा। ११—गदहे। १२—धोबियों के। १३—लिये। १४—बकरी। १५—भेड़ों के।

१—छः। २—क्वार। ३—अगहन।

अतीव रमणीयः भवति। अस्मिन् ऋतौ प्रकृतौ सर्वत्र अपूर्वं सौन्दर्यं दृश्यते[४]। जडे चेतने च सर्वत्र नवः उल्लासः अवलोक्यते[५]। नरेषु नारीषु, बालकेषु वृद्धेषु च कापि अपूर्वा मादकता[६] समायाति। अस्माकं देशस्य प्रसिद्धः वसन्तोत्सवः होलिका अस्यैव ऋतोः आरम्भे भवति।

शिशिर ऋतौ सर्वेभ्यः वृक्षेभ्यः पत्राणि निपतन्ति। परन्तु यदा वसन्त ऋतुः आयाति तदा वृक्षे वृक्षे नूतनानि पल्लवानि लगन्ति। पल्लवे पल्लवे नवीनानि कुसुमानि विकसन्ति। कुसुमे कुसुमे अपूर्वः सुगन्धः आयाति।

अन्यच्च[७]—वने वने कोकिलाः कूजन्ति। पुष्पे पुष्पे भ्रमराः गुञ्जन्ति। मुखे मुखे वसन्तगीतानि श्रूयन्ते। वनानि उपवनानि शोभन्ते। पशवः पक्षिणः मोदन्ते। सर्वत्र सर्वैरेव महान् आनन्दः अनुभूयते।

अस्मिन् ऋतौ शीतलः मन्दः सुगन्धिश्च वायुः वहति। इदानीं न अधिकं शीतं भवति न अधिका उष्णता[८] भवति। अनेन कारणेन भ्रमणे, खेलने, कूर्दने च महान् आनन्दः भवति। एभिः कारणैः अयं वसन्त ऋतुः ऋतुराज इति कथ्यते।

---

## ६—वर्षा ऋतुः

ऋतुषु तृतीयः ऋतुः वर्षा-ऋतुः भवति। ग्रीष्मानन्तरं वर्षा-ऋतुः आगच्छति। वर्षा-ऋतौ अधिकतया वर्षा भवति। अत एव अयं ऋतुः वर्षा-ऋतुः कथ्यते।

४-५—दीख पड़ता है। ६—मतवालापन। ७—और भी। ८—गर्मी।

वर्षा-ऋतौ प्रायेण सर्वदैव वृष्टिः भवति। आकाशमण्डलं निरन्तरं मेघैः आच्छन्नं[१] तिष्ठति। कदाचित् जलबिन्दवः पतन्ति। कदाचित् मुसलधारा वृष्टिः भवति। अस्मिन् ऋतौ सर्वे जलाशयाः जलेन परिपूर्णाः भवन्ति। समन्तात्[२] जलमयी भूमिः दृश्यते।

वर्षा-ऋतौ दृश्यम् अतीव रमणीयं भवति। वनेषु उपवनेषु, वाटिकासु[३] वृक्षेषु, लतिकासु कुसुमेषु, शस्येषु[४] शाद्वलेषु[५], दिशासु विदिशासु च सर्वत्र नयनाभिरामो हरीतिमा[६] दृष्टिगोचरी भवति। अस्य दिगन्तव्यापिनी[७] श्यामलता[८] सर्वेषां मनांसि मोहयति तथा स्वाभाविकी सरसता नीरसे अपि हृदये रसधारां सिञ्चति।

वर्षा-ऋतौ प्रकृतिनटी विविधानि रूपाणि धारयति। क्वचित् मेघाः गर्जन्ति। क्वचित् विद्युतः[९] विस्फुरन्ति[१०]। कदाचित् झञ्झावातः[११] वाति। कदाचित् प्रकाशः भवति। कदाचित् अन्धकारः भवतिः। कदाचित् च इन्द्रधनुः प्रकाशते।

वर्षा-ऋतौ सर्वेषां महान् आनन्दः भवति। वनेषु मयूराः नृत्यन्ति। जलाशयेषु मण्डूकाः[१२] रटन्ति। बिलेषु झिल्लिकाः[१३] नदन्ति। वृक्षेषु चातकाः कूजन्ति। वीथिषु[१४] बालकाः खेलन्ति।

वर्षायाः समयः कृष्यै अपि बहु लाभदायकः भवति। अस्मिन् समये कर्षकाः भूमिं कर्षन्ति[१५]। क्षेत्रेषु बीजानि वपन्ति[१६]। धान्यस्य कृषिः अस्मिन् एव ऋतौ भवति। शस्यानां तृणलतादीनां च महती प्रचुरता जायते।

---

१—घिरा हुआ। २—चारो ओर। ३—बगीचों में। ४—फसलों में। ५—हरी-हरी घासों में। ६—हरियाली। ७—दिशाओं के अन्त तक फैली हुई। ८—श्यामता। ९—बिजलियाँ। १०—चमकती हैं। ११—वर्षा के साथ बहने वाली हवा। १२—मेढक। १३—झींगुर। १४—गलियों में। १५—जोतते हैं। १६—बोते हैं।

अस्मिन् ऋतौ कष्टमपि बहु भवति। भूमिः पङ्किला जायते। तेन अनेके भूमौ स्खलन्ति[१७] पतन्ति[१८] च। जलस्य आधिक्येन मार्गाः अवरुद्धाः[१९] भवन्ति। वायुमण्डलं दूषितं भवति। अनेके रोगाः उत्पद्यन्ते। कीट-पतंगादीनां बहुलता जायते। घोरान्धकारे चौराणाम् उपद्रवः वर्द्धते। इमानि कष्टानि भवन्ति।

तथापि वर्षा-ऋतुः महान् आनन्ददायी ऋतुः अस्ति।

---

## १०—गौः

गौः एकः चतुष्पात्[१] पशुः अस्ति। अस्याः एकं पुच्छं भवति। द्वे शृंगे[२] भवतः। चत्वारः पादाः भवन्ति। अस्याः गले एकं गलकम्बलं[३] भवति। इदं गलकम्बलं अन्यपशूनां गले न भवति।

गौः तृणचारी पशुः अस्तिः। इयं वनेषु भ्रमति घासं तृणं च चरति। यावत् इयं वनेषु इतस्ततः न भ्रमति, नवं नवं तृणं न चरति, तावत् अस्याः सन्तोषः न भवति। अस्याः स्वभावः अतीव सरलः भवति।

गौः महान् उपकारी पशुः अस्ति। इयं दुग्धं ददाति। दुग्धेन दधि भवति। दध्ना घृतं नवनीतं[४] च जायते। अस्याः दुग्धं दधि घृतं च अतीव पवित्रं हितकारकं च भवति।

गौः गोमयं[५] ददाति। गोमयेन गृहं लिप्यते। गोमयेन

---

१७—फिसलते हैं। १८—गिरते हैं। १९—रुके हुए।

१—चौपाया। २—सींघ। ३—गायों के गले में लटकने वाला मांस—गलुथ्था। ४—मक्खन। ५—गोबर।

रसवती[६] पच्यते[७]। गोमयस्य खाद्येन शस्यं वर्द्धते। पूजाकार्य अपि गोमयस्य उपयोगो भवति। गोमूत्रेण च अनेके रोगाः नश्यन्ति।

गौः वत्सान् जनयति। ते शनैः शनैः वृषभाः भवन्ति। तैः वृषभैः कृषिकार्यं भवति। वृषभाः हलं वहन्ति। वृषभाः शकटं वहन्ति। वृषभाः भारं वहन्ति। ते एव तैलयन्त्रम् अपि चालयन्ति। एवं वृषभैः संसारस्य महान् उपकारः भवति। महत् कल्याणं सम्पद्यते।

गोदुग्धम्, गोदधि, गोघृतम्, गोमूत्रम्, गोमयं चेति इमानि पञ्च वस्तूनि अतीव पवित्राणि मन्यन्ते। देवपूजायाम्, पितृकार्ये, संस्कारेषु, हवनकर्मणि च एषां भूयान्[८] उपयोगः भवति। पञ्चगव्यस्य पानेन पापानि अपि नश्यन्ति। गोः दानेन महत् पुण्यं भवति। सर्वे हिन्दवः सर्वेषु धर्मकार्येषु गोदानं कुर्वन्ति।

गोः अगणनीयाः उपकाराः सन्ति। गौः पशुः नास्ति। सा माता अस्ति, पिता अस्ति, देवता अस्ति। अत एव गोरक्षायाः अस्माकं शास्त्रेषु बहु महत्त्वं लिखितं वर्तते। गोरक्षा मनुष्याणां कृते एकं परमावश्यकं कर्त्तव्यं वर्तते। अतः सर्वैः गवां रक्षणं पालनं पोषणं सम्वर्द्धनं च कर्तव्यम्।



६—रसोई। ७—पकती है। ८—बहुत ज्यादा।

## ११—हस्ती

हस्ती एकः महान् पशुः अस्ति। अस्य शरीरम् अति विशालं भवति। अस्य सर्वाणि अङ्गानि स्थूलानि महान्ति च भवन्ति। केवलम् अस्य अक्षिणी[१] ह्रस्वे[२] भवतः।

हस्तिनः एकं विशिष्टम् अङ्गं भवति। तस्य नाम शुण्डा[३] अस्ति। शुण्डया स बहूनि कार्याणि करोति। शुण्डया वृक्षाणां शाखाः त्रोटयति[४]। शुण्डया स खाद्यवस्तूनि मुखे निक्षिपति[५]। शुण्डया जलं पिबति। शुण्डया जिघ्रति[६]। शुण्डया हन्ति। हस्ती हस्तस्य सर्वं कार्यं शुण्डया एव करोति।

हस्ती स्वभावेन अतीव धीरः तथा गम्भीरः भवति। स चञ्चलः न भवति। स महाबलवान् अपि अस्ति परन्तु बलस्य अभिमानं न करोति। अनेके बालका अपि हस्तिपका[७] भवन्ति। ते अङ्कुशेन हस्तिनं मारयन्ति। परन्तु हस्ती तेषाम् उपरि कोपं न करोति। ते यथा कथयन्ति स तथैव चलति आचरति च।

हस्ती वाहनस्य कार्ये आगच्छति। रात्रौ वर्षाकाले च अस्य विशेषेण उपयोगो भवति। वरयात्रासु अपि हस्तिनां विशेषरूपेण आवश्यकता भवति। हस्तिनम् आरुह्य मृगया[८] अपि विधीयते। पूर्वं युद्धेऽपि हस्तिनाम् उपयोगो भवति स्म।

हस्तिनः दन्ताः अपि द्विविधा भवन्ति। अनेके दन्ताः मुखस्य अभ्यन्तरे एव तिष्ठन्ति। परं द्वौ दन्तौ मुखाद् बहिः तिष्ठतः।

---

१—आँखें। २—छोटी। ३—सूँड़। ४—तोड़ता है। ५—फेंकता है, डालता है। ६—सूँघता है। ७—हाथीवान। ८—शिकार।

तौ अतीव दीर्घौ[९] भवतः। परन्तु आभ्यां दन्ताभ्यां भक्षणस्य कार्यं न भवति। इमौ केवलं दर्शनाय एव तिष्ठतः परं यदा त्रुटितौ[१०] भवतः तदा छुरिकादिनिर्माणे एषां दन्तानाम् उपयोगो भवति। हस्तिनां दन्तैः अन्यानि च अनेकानि दर्शनीयवस्तूनि निर्मीयन्ते।

हस्ती एकः अतीव दर्शनीयः पशुः अस्ति। अनेके हस्तिनः बहूनि कौतुकानि अपि कुर्वन्ति। हस्तिनां विशालं शरीरं, गम्भीरं स्वभावं, मन्द-मन्दं गमनम्, अनुशासन-पालनं च दृष्ट्वा मनसि महती प्रसन्नता भवति।

---

## १२—आम्रम्

अस्माकं देशे बहुविधानि फलानि भवन्ति। तेषु फलेषु आम्रं सर्वोत्तमं फलम् अस्ति। अत एव इदं फलानां राजा मन्यते। आम्रं प्रायः सर्वेषु अपि देशेषु फलति। परन्तु भारतवर्षस्य आम्राणि विशेषरूपेण प्रसिद्धानि सन्ति।

उत्पत्तिभेदेन आम्रं द्विविधं भवति। एकं "बीजू" कथ्यते अपरं च "कलमी" इति। बीजू आम्रस्य रोहिनिया सेनुरिया इत्यादयः शताधिकाः भेदाः भवन्ति। कलमी आम्रस्य च मालदह, बम्बैया, लँगड़ा इत्यादयः बहवः भेदाः सन्ति।

"बीजू" आम्रस्य फलानि लघूनि[१] भवन्ति। तदपेक्षया[२]

९—लम्बे। १०—टूटे हुए। १—छोटे। २—उनकी अपेक्षा।

"कलमी" आम्राणि बृहन्ति[३] भवन्ति। बीजू आम्राणि सर्वेषां कृते सुलभानि भवन्ति परं कमलो आम्राणि तु धनिकेभ्यः एव सुलभानि भवन्ति। यतः तानि सर्वत्र न उत्पद्यन्ते[४], महर्घाणि[५] च भवन्ति।

सर्वाणि आम्राणि प्रायः वसन्त ऋतौ एव फलन्ति। आम्रफलानि प्रायेण मधुराणि एव भवन्ति। केषाञ्चित् मधुरता तु अवर्णनीया भवति। कानिचित् अम्लानि[६] तथा नीरसानि अपि भवन्ति। परन्तु एतादृशानि अल्पानि भवन्ति।

आम्रफलस्य अनेके उपयोगाः भवन्ति। यदा आम्राणि अपक्वानि भवन्ति तदा तेषां लेह्यादि[७]—निर्माणं भवति। यदा पक्वानि भवन्ति तदा चूष्यन्ते[८]। आम्राणां रसैः आम्रावर्तः[९] अपि निर्मीयते। आम्राणि शोषयित्वा[१०] तेषां चूर्णम् अपि जनाः निर्मान्ति[११] यत् "अमचूर" इति कथ्यते। तस्य व्यञ्जनेषु उपयोगः भवति। एवं प्रकारेण आम्रफलं बहु उपकारकं सुलभं स्वादिष्ठं मनोहरं च फलम् अस्ति। अत एव संस्कृतकविभिः आम्रफलस्य प्रशंसायां बहूनि पद्यानि लिखितानि सन्ति।

---

## १३—सूर्यास्तम्

यदा सूर्यः अस्तं गच्छति तदा सूर्यास्तकालः भवति। सायंकाले सूर्यः अस्तं गच्छति। अतः सायङ्कालः सूर्यास्तकालः भवति। सूर्यः पश्चिमदिशायां अस्तं गच्छति।

---

३—बड़े। ४—उत्पन्न होते हैं। ५—मँहगे। ६—खट्टे। ७—चटनी आदि। ८—चूसे जाते हैं। ९—अमावट। १०—सुखाकर। ११—बनाते हैं।

सूर्यास्तस्य समयः विश्रामस्य समयः भवति। तस्मिन् समये सर्वे विश्राम कुर्वन्ति। विद्यार्थिनः पठित्वा गृहं आगच्छन्ति। गोचारकाः गाः चारयित्वा गृहं निवर्तन्ते[१]। भृतकाः[२] भृतिं[३] कृत्वा गृहं समायान्ति। पथिका गमनं विहाय क्वचित् आश्रयं गृह्णन्ति।

एवमेव सायङ्काले वणिजः पण्यानि[४] पिदधति[५]। पशवः गोष्ठेषु[६] बध्यन्ते। पक्षिणः स्वकुलायेषु[७] निलीयन्ते[८]। यात्रिणः क्वचित् विश्रामं कुर्वन्ति। भिक्षुका स्वगृहाणि परावर्तन्ते[९]। एवं सर्वे अपि स्वं स्वं निवासस्थानं समाश्रयन्ति[१०]।

सूर्यास्तस्य समयः मनुष्याणां कृते—तत्रापि विशेषतः नागरिकाणां कृते—विहारस्य समयः भवति। अस्मिन् समये केचन खेलन्ति। केचन भ्रमणं कुर्वन्ति। केचन वाटिकासु[११] विहरन्ति। केचन नदीनां तीरेषु भ्रमन्ति। केचन मन्दिरेषु देवदर्शनाय गच्छन्ति। केचन मित्रैः सह मनोरञ्जनं कुर्वन्ति।

सूर्यास्त-समये सर्वत्र अन्धकारः प्रसरति[१२]। अतः तस्मिन् समये गृहे-गृहे दीपकाः ज्वाल्यन्ते। नगरेषु आपणेषु[१३] च सूर्यास्तस्य दृश्यम् अतीव रमणीयं भवति।



१—लौटते हैं। २—नौकर। ३—नौकरी, मजदूरी। ४—दूकानें। ५—बन्द करते हैं। ६—घोठों में। ७—अपने घोंसलों में। ८—छिपते हैं। ९—लौटते हैं। १०—आश्रय लेते हैं। ११—बगीचों में। १२—पसरता है, फैलता है। १३—बाजारों में।

## १४–सूर्योदयः

सूर्यस्य उदयः सूर्योदयः कथ्यते। प्रातः काले पूर्वदिशायां सूर्योदयः भवति। यदा सूर्योदयः भवति तदा अन्धकारस्य नाशः तथा सर्वत्र प्रकाशः जायते।

सूर्योदयस्य समयः अतीव स्फूर्तिमयः तथा उत्साहमयः भवति। तस्मिन् समये सर्वे जनाः शयनात् उत्तिष्ठन्ति[१]। उत्थाय[२] च केचन भ्रमणार्थं गच्छन्ति। केचन नित्यक्रियाः कुर्वन्ति। ततश्च सर्वे स्वस्मिन्-स्वस्मिन् दैनिके कार्ये संलग्ना भवन्ति।

कर्षकाः[३] क्षेत्रेषु हलं चालयन्ति। वणिज[४] आपणेषु[५] पण्यान्[६] उद्घाटयन्ति[७]। स्त्रियः गृहकार्याणि कुर्वन्ति। विद्यार्थिनः पठनं लेखनं च आरभन्ते। पूजकाः मन्दिरेषु पूजाम् अनुतिष्ठन्ति[८]। ब्रह्मचारिणः गुरुकुलेषु सन्ध्योपासनं विदधति। कर्मकराश्च[९] स्वानि स्वानि कार्याणि कर्तुं गच्छन्ति।

एवमेव सूर्योदये जाते पशुपक्षिणः अपि स्व-स्व-व्यापारे संलग्ना भवन्ति। कीटाः पिपीलिकाः[१०] अपि उद्यमे निरता भवन्ति।

यदा सूर्योदयः भवति तदा वनस्पतिषु अपि नवोन्नता आयाति। लता-विटपादयः उल्लसिता जायन्ते। पल्लवाः पुष्पाणि च प्रफुल्लितानि भवन्ति। एवं सूर्योदयेन प्रकृतिराज्ये सर्वत्र नवीना चेतना, नवीनः उत्साहः, नवीनं च सौन्दर्यं समायाति[११]।

---

१–उठते हैं। २–उठकर। ३–किसान। ४–बनिया। ५–बाजारों में। ६–दूकानें। ७–खोलते हैं। ८–करते हैं। ९–मजदूर। १०–चीटियाँ। ११–आ जाता है।

दौर्भाग्यवशात् अनेके अलसा जनाः सूर्योदयकाले अपि शयनं न मुञ्चन्ति[१२]। अनेके शयनात् उत्थाय अपि किञ्चित् कार्यं न कुर्वन्ति। परन्तु अयं स्वभावः हितकरः नास्ति। अतः सर्वैः अपि जनैः प्रातःकाले उत्थाय कर्तव्यपरायणैः भवितव्यम्।

---

## १५—अस्माकं देशः

अस्माकं देशस्य प्राचीनं नाम "भारतं" वर्त्तते। सम्प्रति[१] अस्य हिन्दुस्तान, हिन्द, इण्डिया इत्यपि नामानि सन्ति। अस्य पूर्वदिशायां ब्रह्मदेशः (वर्मा) अस्ति। दक्षिणदिशायां लंका अस्ति। पश्चिमदिशायां आफगानिस्थानं वर्त्तते। उत्तरदिशायां च हिमालयः अस्ति।

अयं देशः पूर्वम् एकः महान् अखण्डः विशालदेशः आसीत्। परन्तु सम्प्रति अयं गौराङ्गाणां[२] दुर्नीतया यवनानां दुराग्रहेण च खण्डितः संवृत्तो वर्त्तते। अस्य खण्डितः भागः पाकिस्तान इति कथ्यते। पाकिस्तानस्य एकः भागः पूर्ववंगेषु अस्ति। द्वितीयश्च भागः पश्चिम-पञ्चाम्बुदेशे[३]।

अस्माकं देशः संसारस्य देशेषु अति पुरातनः[४] देशः अस्ति। अयं ज्ञानस्य धर्मस्य च आदिजन्मभूमिः अस्ति। अत्रैव वेदानां प्रादुर्भावः बभूव। अत्रैव ऋषयः ज्ञानस्य कर्मणश्च विकाशं कृतवन्तः। अत्रैव मानवसभ्यता सर्वप्रथमं जन्म लेभे। इतः एव संसारे सर्वत्र सभ्यतायाः प्रचारो बभूव।

---

१२—छोड़ते हैं।

१—इस समय। २—अंग्रेजों के। ३—पंजाब में। ४—पुराना।

एष देशः महापुरुषाणां प्रसिद्धं जन्मस्थानम् अस्ति। अत्र रामसदृशाः पितृभक्ताः बभूवुः। अत्र भरतसदृशा भ्रातरः अजायन्त। अत्र हरिश्चन्द्रसदृशाः सत्यवादिनः उत्पेदिरे। अत्र भीष्मसदृशा बालब्रह्मचारिणः बभूवुः। अत्र महावीरसदृशाः स्वामिभक्ता अभवन्। अत्र शिव-दधीचि-सदृशा दानवीरा अभूवन्। अत्र बुद्ध-महावीर-सदृशाः महात्मानः प्रादुर्बभूवुः। अत्रैव शङ्कर-रामानुजसदृशा विश्वविश्रुता आचार्या जाताः। अस्य महिमा अवर्णनीयः अस्ति। अस्य गौरवम् अतुलनीयम् अस्ति।

अयं देशः एतादृशः गौरवशाली भूत्वा अपि दुर्दैववशात् मध्ये परतन्त्रतां गतः आसीत्। परन्तु सम्प्रति पुनरपि स्वतन्त्रतां लब्धवान् अस्ति। अस्य उत्कर्षाय सर्वैः अपि भारतवासिभिः जनैः प्रयत्नः कर्तव्यः।

---

## १६—उत्तरप्रदेशः

अस्माकं देशः सम्प्रति द्वाविंशति[१] प्रदेशेषु विभक्तो वर्तते। कश्मीरान् गृहीत्वा त्रयोविंशतिः[२] प्रदेशा भवन्ति। एषु एकः प्रदेशः उत्तरप्रदेशः अस्ति। एतस्य पूर्वे विहारप्रदेशः, दक्षिणे मध्यभारतम्, पश्चिमे दिल्ली तथा उत्तरे नेपालराज्यं वर्तते।

भारतस्य सर्वेषु प्रदेशेषु अयं प्रदेशः विशालतमः अस्ति। एतस्य क्षेत्रफलं सम्प्रति ११२५२३ वर्गमीलपर्यन्तं वर्तते। अत्रत्या

१—बाईस। २—तेईस।

जनसंख्या ८७०००००० मिता वर्तते। एष प्रदेशः सम्प्रति चतुःपञ्चाशत्[३] जनपदेषु ( जिला ) विभक्तः अस्ति। लखनऊ अस्य प्रदेशस्य राजधानी अस्ति।

अयं प्रदेशः यथा विशालतमः[४] अस्ति तथैव श्रेष्ठतमः[५] अपि अस्ति। बहोः प्राचीनकालात् एष प्रदेशः भारतीयसंस्कृतेः केन्द्र-स्थानं वर्तते। अत्रैव गंगा-यमुनादयः पवित्रतमा नद्यः प्रवहन्ति। एष एव रामकृष्णादीनां जन्मभूमिः अस्ति। अस्मिन् एव प्रदेशे काशी-प्रयागादीनि तीर्थानि विराजन्ते। अत्रैव संस्कृतभाषायाः साहित्यस्य च विकाशः समभवत्[६]। इत एव अनेके धार्मिकाः सम्प्रदायाः प्रचलिता बभूवुः।

राजनीतौ, शिक्षायां, शिल्पे तथा वाणिज्यादि-विषयेषु अपि अस्य सम्प्रति महत्त्वपूर्णं स्थानं वर्तते। पण्डितनेहरूप्रभृतीनां प्रसिद्धराजनीतिज्ञानाम् एष एव कार्यस्थानं वर्तते। अस्मिन् प्रदेशे सर्वप्रदेशेभ्यः अधिका विश्वविद्यालयाः सन्ति। अत्रैव संस्कृत-विद्यालयानाम् अपि संख्या अधिका वर्तते। ताजमहलप्रभृतीनि अनेकानि दर्शनीयस्थानानि अत्रैव विद्यन्ते।

शिल्पकलानाम् अपि कृते अस्मिन् प्रदेशे अनेकानि सुप्रसिद्ध-स्थानानि सन्ति। काश्याः शाटिकाः[७], अलीगढस्य तालकानि[८] मिर्जापुरस्य मुरादाबादस्य च पात्राणि, आगरानगरस्य चर्मवस्तूनि, गाजीपुर—जौनपुरयोः सुगन्धितैलानि च सर्वत्र प्रसिद्धानि सन्ति। कर्णपुरं च अस्य प्रधानं व्यापारिकं नगरम् अस्ति।

एवं प्रकारेण एष प्रदेशः अन्य-प्रदेशापेक्षया महान् विशालः भारतस्य हृदयस्वरूपश्च अस्ति।

———

३—चौवन। ४—बहुत बड़ा, सबसे बड़ा। ५—सबसे श्रेष्ठ। ६—हुआ। ७—साड़ियाँ। ८—वाले।

## १७—हिमालयः

हिमालयः एकः पर्वतः अस्ति। अयं पर्वतेषु महान् पर्वतः अस्ति। अत एव अयं पर्वतराज इति उच्यते। अस्मिन् पर्वते हिमस्य[१] अधिकता भवति। तेन अस्य हिमालय इति नाम अस्ति।

अयं पर्वतः भारतस्य उत्तरदिशायाम् अस्ति। अयं महान् विशालकायः लम्बायमानश्च अस्ति। अस्य अनेकानि शिखराणि अतीव उच्चतमानि सन्ति। अस्य गौरीशङ्करनामकं शिखरं संसारस्य सर्वेषु शिखरेषु उच्चतमं मन्यते[२]। अयं पर्वतः भारतस्य उत्तरदिशायाः महाबलवान् प्रहरी[३] इव बहोः कालात् अस्य देशस्य रक्षां कुर्वाणः अस्ति।

हिमालयस्य उपरि अनेके देशाः अनेकानि नगराणि च विद्यमानानि सन्ति। बहूनि वनानि उपवनानि च वर्तन्ते। अत्र अनेका जातयः निवसन्ति। अत्र नानाविधा वनस्पतयः, विविधानि फलानि तथा नानाप्रकाराणि खाद्यवस्तूनि च उपलभ्यन्ते[४]।

अस्मिन् पर्वते अनेकानि तीर्थस्थानानि च सन्ति। बहूनां मुनीनां तपोवनानि विद्यन्ते[५]। बहूनि अतिप्राचीनानि ऐतिहासिक-स्थानानि वर्तन्ते। एवं प्रकारेण अयं पर्वतः महान् विशालः, महान् दीर्घः[६], महान् आश्चर्यकारकः तथा महान् उपकारी च अस्ति। अत एव संस्कृतग्रन्थेषु हिमालयस्य अतीव महत्त्वपूर्णं वर्णनं मिलति। महाकविना कालिदासेन "कुमारसम्भव"

---

१—बर्फ। २—माना जाता है। ३—पहरेदार। ४—पाये जाते हैं। ५—हैं। ६—लम्बा।

महाकाव्यस्य प्रथमसर्गे हिमालयस्य यत् मनोहरं वर्णनं विहितं वर्तते तत् पाठकैः अवश्यमेव पठनीयम्। तस्य इदं प्रथमं पद्यं विद्यते—

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः।
पूर्वापरौ तोयनिधी वगाह्य
स्थितः पृथिव्या इव मानदण्डः ॥

---

## १८—वाराणसी

अस्माकं देशे बहूनि तीर्थस्थानानि सन्ति। तेषु वाराणसी अपि एकं प्रसिद्धं तीर्थस्थानम् अस्ति। इदं काशीनाम्ना अपि प्रसिद्धं वर्तते।

वाराणसी अतीव प्राचीनतमं तीर्थस्थानम् अस्ति। अनेकेषु प्राचीनग्रन्थेषु अस्या महिमा वर्णितः अस्ति। स्कन्दपुराणस्य काशीखण्डे अस्या वाराणस्याः विस्तरेण वर्णनं विहितं वर्तते।

इयं नगरी गंगायाः पवित्रे तटे विराजमाना अस्ति। अत्रैव विश्वनाथस्य प्रसिद्धं सुवर्णमयं मन्दिरम् अस्ति। अन्यानि अपि बहूनि देवमन्दिराणि सन्ति। अत्र एकं "मणिकर्णिका" इति नामकं स्थानं वर्तते। अत्र दूरदूरात् आनीय[१] शवाः[२] दाह्यन्ते[३]। अत्रैव एकं पिशाचमोचनं नाम तीर्थमस्ति यत्र यात्रिणः आगत्य पितॄणां श्राद्धक्रियां कुर्वन्ति। शिवरात्रिदिने अत्र विशेषरूपेण मेला

१—लाकर। २—मुर्दे। ३—जलाये जाते हैं।

लगति। ग्रहणसमये अपि अत्र महान् जनसमुदायः एकत्र भवति। अत्र गंगायां स्नानाय श्रीविश्वनाथस्य दर्शनाय च सदैव भिन्न-भिन्न-प्रदेशेभ्यः जनाः आगच्छन्ति।

वाराणसी भारतस्य सुप्रसिद्धं पुरातनं विद्यापीठमपि अस्ति। अत्र बहोः प्राचीनकालात् पठनपाठनयोः परम्परा आगच्छति। अत्र अनेके विख्याताः पण्डिताः जाताः सन्ति। अद्यापि अत्रत्यानां पण्डितानां देशे विदेशे सर्वत्र प्रतिष्ठा भवति। विश्वविख्यातो हिन्दू-विश्वविद्यालयः अत्रैव विराजते। संस्कृत-शिक्षायाः प्रसिद्धं केन्द्रं सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः अस्याः एव शोभां वर्द्धयति।

वाराणस्यां गंगायाः तीरे अनेके मनोहराः घट्टाः सन्ति। बहूनि सुधाधवलितानि[४] सौधानि[५] च विराजन्ते। यदा सायङ्काले तीरवर्तिषु[६] गृहेषु दीपाः ज्वाल्यन्ते[७] तदा तीरे अतीव रमणीयं दृश्यं दृष्टिगोचरं भवति।

अस्याः प्रसिद्धेषु घट्टेषु[८] सन्ध्याकाले महान् जनसमुदायः एकत्र भवति। तत्र केचन स्नानं कुर्वन्ति। केचन सन्ध्यावन्दनं कुर्वन्ति। केचित् कथां शृण्वन्ति। केचित् कीर्तनं कुर्वन्ति। केचित् गोष्ठीसुखम् अनुभवन्ति। केचित् नौकासु विहरन्ति। केचित् गंगायाः दृश्यम् अवलोकयन्ति।

एवं प्रकारेण वाराणसी अस्माकं परमं पवित्रं तीर्थस्थानम्, विद्यायाः विश्वविख्यातं केन्द्रम्, तुलसीदासस्य कबीरदासस्य च साधनाभूमिः तथा मुमुक्षूणां मुक्तिदात्री नगरी अस्ति।

---

४—चूना से सफेद किये हुए। ५—महल, कोठियाँ। ६—किनारों पर के। ७—जलाये जाते हैं। ८—घाटों पर।

## १६—दीपावली

यथा होलिका हिन्दूनाम् एकं महत् पर्व वर्तते तथैव दीपावली अपि एकं महत् पर्व अस्ति। इदं कार्तिकमासस्य कृष्णपक्षे अमावास्यायां भवति। अस्मिन् पर्वणि सर्वत्र विशेषरूपेण दीपाः ज्वाल्यन्ते[1]। अत एव अस्य नाम दीपावली इति वर्तते।

अस्मिन् दिने सर्वे जनाः स्व-स्व-गृहाणि परिष्कुर्वन्ति[2]। अन्तः[3] बहिः, नीचैः उपरि, पश्चात् पुरस्तात्[4], सर्वत्र सम्मार्जना[5] विधीयते[6]। केचन स्वगृहं मृत्तिकया लेपयन्ति। केचन सुधया[7] लेपयन्ति। केचन नानाविधैः रङ्गैः स्वगृहान् भूषयन्ति[8]। बहवः पल्लव-पुष्पादिना अपि स्वगृहान् अलंकुर्वन्ति[9]।

ततः सायंकाले सर्वे जनाः स्व-स्व-गृहे दीपान् ज्वालयन्ति। नगरनिवासिनः जनाः स्व-स्व-गृहेषु विद्युद्वर्तिकाः[10] अपि प्रकाशयन्ति। गृहे, मन्दिरे, गोष्ठे[11], कूपे, अलिन्दे[12], द्वारे सर्वत्र दीपाः ज्वाल्यन्ते। अस्मिन् दिने चतुर्दिक्षु[13] दीपाः एव दृष्टिपथम्[14] आयान्ति[15]। सर्वाः दिशः सर्वं गगनमण्डलं च प्रकाशमयं भवति।

अस्य दिनस्य सायङ्कालिकी शोभा अतुलनीया भवति,

---

१—जलाये जाते हैं। २—साफ करते हैं। ३—भीतर। ४—आगे, सामने। ५—सफाई! ६—की जाती है। ७—चूना से। ८—सजाते हैं। ९—सुशोभित करते हैं। १०—बिजली की बत्तियाँ। ११—घोटा। १२—ओसारा, दालान। १३—चारो ओर। १४—नजरों के सामने। १५—आते हैं।

अवर्णनीया भवति। नगरेषु सर्वे जनाः अस्याः शोभायाः दर्शनाय परितः भ्रमन्ति।

अस्मिन् दिने रात्रौ लक्ष्मीपूजनं भवति। तत्रापि वणिजः[१६] विशेषरूपेण लक्ष्मीपूजां कुर्वन्ति वार्षिकं च आय-व्ययादि[१७] गणयन्ति। बहवः जनाः स्वभाग्य-परीक्षायै द्यूतक्रीडाम्[१८] अपि कुर्वन्ति। एतस्मिन् दिने बहवः जनाः नवीनानि पात्राणि वस्त्राणि च क्रीणन्ति[१९]।

अस्मिन् दिने रात्रिपर्यन्तं जना जागरणं कुर्वन्ति, परितः भ्रमन्ति, दीपमालाः अवलोकयन्ति, खेलन्ति, मोदन्ते च। अस्यां रात्रौ रात्रेः अन्तिमे प्रहरे[२०] स्त्रियः शूर्पान्[२१] वादयित्वा[२२] गृहात् दरिद्रायाः निस्सारणं कुर्वन्ति। एवं प्रकारेण दीपावली प्रतिवर्षमागत्य प्रत्येकं गृहं शोभयति तथा सर्वेषामुल्लासं वर्धयति।

---

## २०—होलिका

होलिका हिन्दूनाम् एकः उत्सवः अस्ति। अयं महान् आनन्द-दायी उत्सवः अस्ति। अयं वसन्तोत्सवः इत्यपि कथ्यते। अयम् उत्सवः फाल्गुनस्य पूर्णिमायां तथा चैत्रकृष्णपक्षस्य प्रतिपदि भवति।

तत्र प्रथमदिने रात्रौ होलिकादाहः भवति। सर्वे जनाः स्वस्वग्रामे एकत्र[१] काष्ठादि-सञ्चयं[२] कुर्वन्ति। तं च रात्रौ सर्वे

---

१६—बनिया। १७—आमद और खर्च। १८—जुए का खेल। १९—खरीदते हैं। २०—पहर में। २१—सूपों को। २२—बजाकर।

१—एक जगह। २—लकड़ी आदि का संचय।

सम्मिल्य ज्वालयन्ति। अयम् एव विधिः होलिकादाहः कथ्यते।

ततः द्वितीयदिने प्रातः धूलिवन्दनं भवति। जनाः धूलिं कर्दमं[३] च परस्परं प्रक्षिपन्ति[४]। बहवः अश्लीलशब्दान् अपि उच्चारयन्ति। अनेके अश्लीलगीतानि अपि गायन्ति। सर्वे जनाः उन्मत्ताः[५] इव[६] जायन्ते। सङ्घीभूय[७] सर्वे जनाः स्वस्वग्रामे गायन्तः वादयन्तः खेलन्तः हसन्तश्च सर्वतः भ्रमन्ति।

ततः अपराह्णे सायंकाले वा अवीरगुलालादिकं प्रयुज्यते। केचन शुष्कमेव[८] अवीरगुलालं मुखे लगयन्ति। केचन जले मेलयित्वा शृङ्गिकया[९] प्रक्षिपन्ति। गृहे-गृहे सम्मिलित-रूपेण गीतानि गीयन्ते। अर्धरात्रि-पर्यन्तं गीतवाद्यादिकं चलति। अस्मिन् दिने अपूपादीनि[१०] नानाविधानि मिष्टभोज्यानि अपि गृहे-गृहे निर्मीयन्ते तथा सर्वैरपि भुज्यन्ते।

अयं महान् आनन्ददायकः उत्सवः अस्ति। अस्मिन् दिने परदेशवासिनः अपि स्वस्वगृहम् आयान्ति। सर्वे जनाः वैरादिकं विस्मृत्य[११] परस्परं मिलन्ति। सर्वे सर्वेषां गृहे गच्छन्ति। शरीरं, वस्त्रं, गृहं, द्वारं, सर्वम् अपि रङ्गमयं भवति। सर्वत्र हर्षस्य उल्लासस्य च साम्राज्यं भवति। गीतैः वाद्यैश्च समस्तं गगनमण्डलम् आपूरितं भवति।

अत एव होलिका हिन्दूनां सर्वप्रियः महोत्सवः अस्ति।

---

३—कादों को। ४—फेंकते हैं। ५—पागल। ६—समान। ७—संगठित होकर। ८—सूखा ही। ९—पिचकारी से। १०—पूआ वगैरह। ११—भूलकर।

## २१—सरस्वतीपूजा

सरस्वती अस्माकम् एका देवता अस्ति। इयं ज्ञानस्य देवता अस्ति। यथा शक्तेः देवता दुर्गा अस्ति, सम्पत्तेः देवता लक्ष्मीः अस्ति तथैव ज्ञानस्य देवता सरस्वती अस्ति।

सरस्वत्याः चत्वारः हस्ता भवन्ति। तेषु एकस्मिन् हस्ते सा पुस्तकं धारयति, एकस्मिन् हस्ते मालां धारयति, एकस्मिन् हस्ते वीणां धारयति तथा एकेन हस्तेन वीणां वादयति।

सरस्वत्याः वाहनं[१] हंसः अस्ति। इयं पद्मासने तिष्ठति। इयं शुक्लानि वस्त्राणि धारयति। अस्याः मूर्तिः अतीव मनोहरा गम्भीरा शान्तिमयी प्रसन्नाकारा च भवति।

सरस्वती ज्ञानस्य अधिष्ठात्री देवता अस्ति। इयं ज्ञानमयी अस्ति। इयं ज्ञानं ददाति, अज्ञानं दूरीकरोति। इयं विवेकं ददाति, अविवेकं च निवारयति। इयं विद्यां ददाति अविद्यां च नाशयति।

अत एव सर्वे विद्योपासकाः सरस्वतीं सेवन्ते, सरस्वतीं प्रणमन्ति, सरस्वतीं पूजयन्ति, सरस्वतीं स्तुवन्ति[२] तथा सरस्वतीम् एव उपासते[३]।

सरस्वती एव विदुषां[४] विद्यार्थिनां च महामान्या देवता अस्ति। अत एव वसन्तपञ्चम्यां भारतस्य सर्वेषु अपि विद्यालयेषु महता समारोहेण सरस्वत्याः पूजा भवति।

यदा सरस्वती प्रसन्ना भवति तदा विद्यार्थिभ्यः विद्यां ददाति बुद्धिं ददाति, विवेकं च ददाति। परं सरस्वती केन प्रकारेण

---

१—सवारी। २—स्तुति करते हैं। ३—उपासना करते हैं। ४—विद्वानों की।

प्रसन्ना भवति ? परिश्रमेण, अभ्यासेन, सदाचारेण, विनयेन, गुरुसेवया च। अतः विद्याभिलाषिभिः परिश्रमेण पठनीयम्, पठितस्य पुनः पुनः अभ्यासः कर्तव्यः, सदाचारस्य पालनं कर्तव्यम्, सर्वत्र विनयेन वर्तितव्यम् तथा गुरुजनानां सेवा कर्तव्या। इमानि एव सरस्वतीपूजायाः प्रधानानि साधनानि सन्ति।

---

## २२—दुर्गापूजा

श्रीदुर्गा हिन्दुसमाजस्य एका सुप्रसिद्धा देवता अस्ति। काली, चण्डी, दुर्गा, भगवती इत्यादीनि अस्या अनेकानि नामानि सन्ति।

यथा सरस्वती ज्ञानस्य अधिष्ठात्री देवता अस्ति तथैव श्रीदुर्गा शक्तेः अधिष्ठात्री देवता अस्ति। अस्याः अष्टौ बाहवः सन्ति। सर्वेषु हस्तेषु इयम् अस्त्र-शस्त्राणि धारयति। सिंहः अस्या वाहनं वर्तते। तम् एव आरुह्य[1] इयं देवी शस्त्रास्त्रैः शत्रूणां दमनं करोति। श्रीदुर्गासप्तशती-पुस्तके विस्ताररूपेण दुर्गायाः कथा लिखिता अस्ति।

अस्माकं देशे दुर्गापूजायाः महान् प्रचारः अस्ति। तत्रापि महिलासमाजे विशेषरूपेण दुर्गापूजायाः प्रचारः अस्ति। ग्रामे-ग्रामे दुर्गायाः मन्दिराणि वर्तन्ते। तत्र समये-समये स्त्रियः गत्वा दुर्गायाः पूजनं कुर्वन्ति। गीतानि गायन्ति। परिक्रमां कुर्वन्ति। मन्दिरं प्रक्षालयन्ति[2]। पूजारूपेण विविधवस्तूनि समर्पयन्ति[3]। स्वकल्याणाय च नानाविधाः प्रार्थनाः कुर्वन्ति।

---

१—चढ़कर। २—धोती है, साफ करती हैं। ३—चढ़ाती हैं।

नवरात्रे नव-दिन-पर्यन्तं दुर्गादेव्याः विशेषरूपेण पूजा भवति। तदानीं गृहे-गृहे दुर्गापूजा भवति। गृहे-गृहे दुर्गागीतानि गीयन्ते। गृहे-गृहे दुर्गापाठः भवति। नवरात्रस्य अन्त महान् समारोहः भवति। अनेकेषु स्थानेषु मेला लगति। बहुषु नगरेषु महावीर-ध्वजः निस्सरति[४]। एवं प्रकारेण सर्वसाधारण-समाजे दुर्गापूजायाः विशेषमहत्त्वं वर्तते। शक्तिप्राप्तये सर्वैः दुर्गायाः उपासना कर्तव्या।

---

## २३—गङ्गा

गंगा भारतस्य एका महानदी अस्ति। इयं हिमालयात् पर्वतात् निर्गच्छति[१] ततः प्रयागम् आगत्य यमुनासरस्वतीभ्यां मिलति। पुनः अनेकमार्गैः गच्छन्ती समुद्रे निपतति।

गंगा आर्याणां पवित्रतमा नदी अस्ति। अस्याः शास्त्रेषु महान् महिमा वर्णितः अस्ति। गंगायाः जलम् अति पवित्रं मन्यते। गंगाजलस्य पानेन पापानि शुद्ध्यन्ति। गंगास्नानस्य अपि बहु महत्त्वं लिखितं वर्तते। अत एव असंख्याः[२] जनाः प्रतिवर्षं गंगास्नानं कर्तुं गच्छन्ति। केचन हरिद्वारं गच्छन्ति, केचन प्रयागं गच्छन्ति, केचन काशीं गच्छन्ति तथा केचन अन्यानि समीपवर्तीनि स्थानानि।

गंगायाः तटं पवित्रं तपोमयं च भवति। बहोः कालात् गंगातटे साधवः निवसन्ति। ते तत्र तपस्यां कुर्वन्ति ईश्वरस्य ध्यानं च कुर्वन्ति।

---

४—निकलता है। १—निकलती है। २—अनगिनत।

गंगायाः जलं स्वास्थ्यकरम् अपि भवति। गंगायाः जलं कदापि कीटादिना दूषितं न भवति। गंगाजलस्य पानेन, गंगाजलस्य स्पर्शेण, गंगाजले स्नानेन, गंगातीरे निवासेन, गंगावायुसंसर्गेण च महान् शारीरिकः लाभः भवति।

अस्याः तीरे अनेकानि नगराणि वर्तन्ते। तानि नगराणि व्यापारस्य प्रधानकेन्द्राणि सन्ति। यथा हरिद्वार, प्रयाग, काशी, पटना, मुंगेर, भागलपुर, कलकत्ता इत्यादि। क्षेत्रसेचने[३] व्यापारकरणे च गंगा अस्माकं प्रभूतमुपकारं करोति। एवं गंगा लोके परलोके च उभयत्र[४] अस्माकं हितं करोति।

---

## २४—मेला

"मेला" शब्दः अस्माकं समाजे अतीव प्रचलितः वर्त्तते। यत्र मेला लगति तत्र बहूनां स्त्रीपुरुषाणां समुदायः एकत्र भवति। अत एव बहूनां मिलनात् तस्य मेला इति नाम प्रसिद्धम् अस्ति।

संसारस्य प्रायः सर्वेषु अपि देशेषु मेला लगन्ति। अस्माकं देशे अपि विशिष्टाः सामान्याश्च अनेकाः मेलाः प्रसिद्धाः सन्ति। भारतवर्षस्य सकलाः अपि मेलाः प्रायेण धार्मिकेषु स्थानेषु, व्रतपर्वादिषु अवसरेषु च लगन्ति। यथा काश्यां शिवरात्रिसमये, अयोध्यायां रामनवमीतिथौ, मथुरायां गोपाष्टमातिथौ, जगन्नाथपुर्य्यां रथयात्राऽवसरे तथा प्रयागे कुम्भसमये च। एतदतिरिक्तं ग्रहणादिसमये काशी—प्रयागादि—तीर्थक्षेत्रेषु अपि मेलाः लगन्ति।

---

३—खेतों के सीचने में। ४—दोनों जगह।

मेलाः द्विविधाः भवन्ति। धर्मप्रधानाः व्यापारप्रधानाश्च। धर्मप्रधानासु मेलासु कुम्भमेला, व्यापारप्रधानासु मेलासु च विहारस्य सोनपुरमेला विशेषरूपेण प्रसिद्धा वर्तते। सोनपुरमेला तु संसारस्य सुप्रसिद्धासु व्यापारिकमेलासु अन्यतमा कथ्यते।

सामाजिकजीवने मेलानां महान् उपयोगः अस्ति। मेलासु आवश्यकवस्तूनां क्रय-विक्रयौ[१] भवतः। चित्रविचित्राणां वस्तूनाम् अवलोकनं भवति। सभा-सम्मेलनादिषु व्याख्यानादि श्रूयते[२]। नव-नव-प्रदेशानां परिचयः जायते। महापुरुषाणां दर्शनं भवति। चिरवियुक्तानि[३] मित्राणि मिलन्ति। विविधदेवानां दर्शनस्य, गंगादितीर्थेषु स्नानस्य च पुण्यफलं लभ्यते। मनोरञ्जनम्, बुद्धेः विकाशः, व्यावहारिकता चेत्यादयः अपि अनेके लाभाः भवन्ति। परन्तु इमे सर्वे लाभाः तदैव[४] भवितुमर्हन्ति[५] यदा मेलासु सुप्रबन्धः सुव्यवस्था च स्यात्। अनेकासु मेलासु सुप्रबन्धस्य अभावः दृश्यते[६]। तेन क्वचित् चौरादीनाम् उपद्रवः, क्वचित् विषूचिकादि[७]रोगाणां प्रकोपः, क्वचित् अग्निदाहस्य[८] दुर्घटना, क्वचित् स्थानस्य संकीर्णता, क्वचित् खाद्यपेयवस्तूनां[९] अशुद्धता चेति नानाविधाः दुर्व्यवस्थाः दृष्टिगोचराः भवन्ति। तेन जनतायाः महत् कष्टं भवति। अतः मेलाप्रबन्धकैः अधिकारिभिः तथा सुप्रबन्धः कर्तव्यः यथा जनतायाः किमपि कष्टं न स्यात्।

---

१—खरीद-बिक्री। २—सुने जाते हैं। ३—बहुत दिनों से बिछुड़े। ४—तभी। ५—हो सकते हैं। ६—देखा जाता है। ७—हैजा आदि। ८—अगलग्गी। ९—खाने-पीने की वस्तुओं की।

## २५—वरयात्रा

यदा कश्चिद् वरः विवाहार्थं गच्छति तदा तेन सह अन्येऽपि बहवः जनाः गच्छन्ति। इयम् एव यात्रा वरयात्रा इति कथ्यते। अस्यां यात्रायां वरः प्रधानः भवति तेन अस्याः यात्रायाः वरयात्रा इति नाम अस्ति।

वरयात्रायां सर्वतः अग्रे नूतनेन सुन्दरेण च वेषभूषादिना सुसज्जितः वरः गच्छति। स शिविकायां[१] मनोहरे आसने उपविष्टः तिष्ठति। क्वचित् क्वचिद् वराः घोटकम्[२] अपि आरुह्य[३] गच्छन्ति। वरस्य पृष्ठतः अन्ये बन्धुबान्धवाः, सम्बन्धिनः, सुहृदः, भृत्यकर्मकराः, वाद्यवादकाः गजाश्वादयश्च गच्छन्ति। सर्वप्रकारेण सुसज्जिता वरयात्रा वरस्य गृहात् गीतवादित्रपुरस्सरं महता समारोहेण समुल्लासेन च सह मङ्गलमये मुहूर्ते निस्सरति।

कन्यायाः ग्रामस्य समीपे वरयात्रिकाणां[४] कल्यावर्तस्य[५] कृते एकं निश्चितं स्थानं भवति। अस्मिन् स्थाने सर्वे वरपक्षीयाः जना एकत्र भवन्ति भोजनविश्रामादिकं च कुर्वन्ति। ततः यदा द्वारपूजायाः समयः आसन्नः[६] भवति तदा सर्वे वरयात्रिकाः जनाः वेषभूषादिभिः सुसज्जिताः भूत्वा कन्यागृहं प्रति गमनाय समुद्यताः भवन्ति।

इतश्च कन्यायाः द्वारं सम्यक् प्रकारेण स्वच्छीकृतं, गोमयादिना उपलिप्तं, हरिद्रया गोधूमचूर्णेन च चर्चितं, पल्लवपुष्पादिना

---

१—पालकी पर। २—घोड़े पर। ३—चढ़कर। ४—बरातियों के लिए। ५—कलेवा के। ६—समीप।

समलंकृतं, विविधवर्णैः कागदपत्रादिभिश्च परिशोभितं भवति। तत्र पूर्वतः एव सर्वे कन्यापक्षीयाः नराः नार्यश्च सुसज्जिताः सत्यः वरस्य वरयात्रायाश्च अवलोकनार्थं समुत्सुकाः तिष्ठन्ति। ततश्च कन्याद्वारतः किञ्चिद् दूरे उभयोः वर-कन्यापक्षयोः मेलनं प्रदर्शनादिकं[7] च भवति। अनन्तरं सर्वे वरपक्षीयाः जनाः त्वरितमेव विविधवाद्यैः गजाश्वादिवाहनैश्च सह महता वेगेन अहमहमिकया[8] द्वारे समवेताः भवन्ति। ततः द्वारे गणेशादि-पूजनं प्रारभ्यते। अस्मिन् अवसरे क्वचित् मङ्गलानि पठ्यन्ते, क्वचित् गीतानि गीयन्ते, क्वचित् वाद्यानि वाद्यन्ते, क्वचित् च स्नेह-सौहार्द-पुरस्सरं परस्परं मिलन्तः आलपन्तश्च जनाः दृश्यन्ते। एवं च इदं द्वारपूजायाः दृश्यम् अतीव रमणीयं हर्षवर्द्धकं हृदयाह्लादकरं च भवति।

द्वारपूजानन्तरं सर्वे वरपक्षीयाः जनाः तस्मिन् स्थाने गच्छन्ति यत्र एतेषां निवासाय वितानस्य[9] पटमण्डपादीनां[10] च प्रबन्धः भवति। तत्रैव दिनद्वयं दिनत्रयं वा वरयात्रा निवसति। ततः एव विवाहस्य अङ्ग-भूतानि सर्वाणि कार्याणि सम्पद्यन्ते। अनन्तरं सर्वेषु कार्येषु सम्पन्नेषु तृतीयस्मिन् चतुर्थे वा दिने वरयात्रा पुनः स्वस्थानं प्रति निवृत्ता भवति। इदमेव वर्तमानकालस्य वरयात्रायाः साधारणं स्वरूपं वर्तते। परन्तु प्रदेशभेदेन स्थान-भेदेन जातिभेदेन च वरयात्राया नानाविधानि रूपाणि भवन्ति नानाविधाश्च लोकाचाराः प्रचलन्ति।

———

७-घुड़दौड़। ८-होड़ से। ९-सामियाना। १०-रावटी।

## २६—पाठशाला

यत्र बालका: शिक्षकेभ्य: पाठं पठन्ति सा पाठशाला कथ्यते। शिक्षासंस्थासु पाठशाला प्रारम्भिकी शिक्षासंस्था अस्ति। अत्रैव बालका: अक्षरारम्भं कुर्वन्ति तथा प्राथमिकीं शिक्षां च प्राप्नुवन्ति।

एकस्यां पाठशालायाम् अनेका: कक्षा: भवन्ति। एकैकस्यां कक्षायाम् एकैक: शिक्षक: पाठयति। अत: प्रत्येकं पाठशालासु प्राय: त्रय: चत्वार: वा शिक्षका: भवन्ति। तेषु एक: प्रधान: शिक्षक: भवति अन्ये च सहायकशिक्षका: भवन्ति।

सर्वा: पाठशाला: प्रायेण दशवादनकाले[१] लगन्ति चतुर्वादनकाले[२] च समाप्तिं गच्छन्ति। परन्तु अयं शीतकालस्य नियमः अस्ति। ग्रीष्मकाले तु प्रात: सार्ध-षड्वादन-काले[३] पाठशाला: उद्घाटयन्ते[४] तथा सार्धदशवादनकाले[५] च पिधीयन्ते[६]।

यदा पाठशाला लगति तदा प्रारम्भे सर्वप्रथमम् ईश्वरप्रार्थना भवति। सर्वे बालका: पंक्तिं बद्ध्वा[७] तिष्ठन्ति। तेषु कश्चित् एक: द्वौ वा बालकौ पूर्वं प्रार्थनां गायत:[८], तत्पश्चात् अन्ये सर्वे बालका: गायन्ति। ईश्वरप्रार्थनाया: पश्चात् उपस्थितिगणना[९] भवति। तदनन्तरं सर्वे बालका: स्व-स्व-कक्षा गच्छन्ति, निजे निजे आसने उपविशन्ति, तथा पठनं लेखनं च प्रारभन्ते[१०]।

---

१—दस बजे। २—चार बजे। ३—साढ़े छ बजे। ४—खोली जाती है। ५—साढ़े दस बजे। ६—बन्द की जाती है। ७—बाँध कर। ८—गाते हैं। ९—हाजिरी। १०—आरम्भ करते हैं।

भिन्न-भिन्न-कक्षासु भिन्न-भिन्न-विषयाणां पाठनं भवति। क्वचित् साहित्यस्य, क्वचित् व्याकरणस्य, कुत्रचित् गणितस्य, क्वचित् इतिहासस्य, क्वचित् भूगोलस्य, क्वचित् चित्रकलायाः तथा क्वचित् अन्यविषयाणां च। लेखनकलायाः तथा वाचन-कलायाः अपि शिक्षणं भवति येन बालकाः सुन्दरलेखने शुद्धवाचने च कुशलाः भवेयुः।

मध्ये प्रायः एकवादनकाले पाठशालासु जलपानस्य कृते अवकाशः[११] भवति। तस्मिन् समये घण्टिका[१२] वदति। यदा जलपानस्य घण्टिका वदति तदा सर्वे छात्राः पठनं लेखनं च परित्यज्य[१३] जलपानं कर्तुं गच्छन्ति। तदानीं तेषु केचन जलं पिबन्ति, केचन भोजनं कुर्वन्ति, केचित् च विश्रामं कुर्वन्ति। अन्ये च केचित् भ्रमन्ति, केचित् खेलन्ति, तथा केचित् अन्यैः साधनैः मनोविनोदं कुर्वन्ति। तत्पश्चात् अवकाशे समाप्ते पुनः पठितुं स्व-स्व-कक्षासु छात्राः गच्छन्ति।

पुस्तकपठनातिरिक्तं बालकाः कानिचत् अन्यानि अपि कार्याणि कुर्वन्ति येन तेषां मनोविनोदो भवति, श्रमशक्तिः वर्धते तथा शरीरं च स्वस्थं तिष्ठति। तानि कार्याणि इमानि सन्ति — यथा—कृषिकार्यम्, पाठशालीय-पुष्पवाटिकायाः[१४] संस्कारः[१५], श्रमदानम्, खेलनं गानादिकं च।

चतुर्वादनकाले पाठशालायाः अवकाशो भवति। तस्मिन् समये सर्वे बालकाः अवकाशस्य घण्टिकां श्रोतुं अतीव उत्सुकाः तिष्ठन्ति। यदा च घण्टिका वदति तदा सर्वे बालकाः अतीव प्रसन्ना भवन्ति। ततः त्वरितमेव[१६] स्व-स्व-पुस्तकानि, लेखनीं[१७],

---

११—छुट्टी। १२—घंटी। १३—छोड़कर। १४—फुलवारी की। १५—सफाइ।
१६—तुरन्त ही। १७—कलम।

मसीपात्रं[१८], पट्टिकां[१९], खटिकं[२०] च गृहीत्वा ते स्वं स्वं गृहं गन्तुं प्रवृत्ताः भवन्ति तथा हसन्तः, खेलन्तः, धावन्तः, उच्छलन्तः[२१] कूर्दमानाः[२२], गायन्तः, वदन्तः, विवदमानाश्च[२३] शीघ्रंमेव गृहं प्राप्नुवन्ति[२४]।

---

## २७—परीक्षा

विद्यार्थिनां योग्यतायाः परीक्षणं परीक्षा इति कथ्यते। परीक्षा छात्राणां बुद्धेः परिश्रमस्य च तोलनस्य[१] एका महती तुला[२] अस्ति। यदा विद्यार्थिनां परीक्षा भवति तदा एव तेषां बुद्धेः, प्रतिभायाः, स्मरणशक्तेः, परिश्रमस्य, विद्यानुरागस्य, तथा लेखनशक्तेः, सम्यक् परिज्ञानं भवति। अत एव परीक्षायाः परम्परा शिक्षायाः आरम्भकालात् एव आगच्छन्ती[४] विलोक्यते[५]।

परीक्षा द्विविधा[६] भवति, एका पाठशालीया अपरा[७] राजकीया[८] च। तत्र पाठशालीया परीक्षा पाठशालायां एव भवति। अस्याः परीक्षायाः सर्वां व्यवस्थां पाठशालीयाः अध्यापकाः एव कुर्वन्ति। इयं च पाठशालीया परीक्षा वर्षे वारत्रयं[९] भवति। एका त्रिषु मासेषु, एका षट्सु मासेषु तथा एका वर्षस्य अन्ते। इयं गृहपरीक्षा अपि उच्यते।

---

१८—दावत। १९—पटरी। २०—खड़िया। २१—उछलते हुए। २२—कूदते हुए। २३—लड़ते झगड़ते हुए। २४—पहुँचते हैं।

१—तौलने की। २—तराजू। ३—अच्छी तरह। ४—आती हुई। ५—देखी जाती है। ६—दो प्रकार की। ७—दूसरी। ८—सरकारी। ९—तीनवार।

द्वितीया परीक्षा राजकीया भवति। राजकीयपरीक्षायाः सञ्चालनं व्यवस्थां च राजकीया शिक्षा-परीक्षा-परिषत्[१०] करोति। इयं परीक्षा गृहपरीक्षापेक्षया अधिका सुव्यवस्थिता, प्रामाणिकी मूल्यवती च अस्ति। यः छात्रः अस्यां परीक्षायाम् उत्तीर्णः भवति स एव अग्रिमकक्षासु पठितुं शक्नोति।

इयं परीक्षा परिषद्द्वारा स्वीकृतेषु परीक्षाकेन्द्रेषु भवति। येषां छात्राणां यस्मिन् परीक्षाकेन्द्रे परीक्षा भवित्री[११] भवति तेषां नामानि तस्मिन् परीक्षाकेन्द्रे प्रेष्यन्ते[१२]। तस्य परीक्षाकेन्द्रस्य अध्यक्षः तत्र तेषां-तेषां विद्यार्थिनां परीक्षायाः व्यवस्थां करोति।

छात्राः निर्धारित-समये परीक्षां दातुं परीक्षाकेन्द्रेषु उपस्थिताः भवन्ति। परीक्षाभवने प्रवेशाय यदा घण्टिका वदति तदा सर्वे छात्राः प्रवेशपत्रं गृहीत्वा परीक्षाभवने प्रविशन्ति निजं च स्थानम् अन्विष्य[१३] तत्र उपविशन्ति। अनन्तरं च यदा द्वितीया घण्टिका वदति तदा तेभ्यः प्रश्नपत्राणि दीयन्ते। ततः छात्राः प्रश्नपत्रम् एकवारम् आद्योपान्तं पठित्वा विचार्य च उत्तरलेखनस्य आरम्भं कुर्वन्ति। परीक्षावसरे सर्वेषु परीक्षाभवनेषु एकैकः निरीक्षकः भवति यः तत्र निरीक्षणस्य कार्यं करोति। परीक्षासमये समाप्ते, ततः पूर्वम् एव वा, छात्राः स्वां स्वाम् उत्तरपुस्तिकां निरीक्षकाय समर्प्य[१४] परीक्षाभवनाद् बहिः[१५] निस्सरन्ति[१६]।

परीक्षावसरे परीक्षार्थिनां कृते अनेके नियमाः भवन्ति येषां पालनं परमावश्यकं भवति। यथा—परीक्षार्थिभिः किमपि पुस्तकं पत्रं वा सह न नेतुं शक्यते, परीक्षार्थिनः परस्परं वार्तालापं कर्तुं न शक्नुवन्ति तथा एकः परीक्षार्थी अन्यपरीक्षार्थिनः लेखस्य

---

१०–बोर्ड। ११–होनेवाली। १२–भेज दिये जाते हैं। १३–ढूँढकर। १४–देकर। १५–बाहर। १६–निकल जाते हैं।

अनुकरणं कर्तुं न शक्नोति इत्यादि। एतेषां नियमानाम् उल्लंघनं कुर्वन् परीक्षार्थी दण्डनीयः भवति।

यदि एतेषां नियमानां कठोरतया पालनं न स्यात् तर्हि परीक्षायाः किमपि मूल्यमेव न भविष्यति। अतः परीक्षायाः मूल्यस्य महत्त्वस्य च रक्षणार्थं एषां नियमानां महती उपयोगिता वर्तते। परन्तु महतः दुःखस्य अयं विषयः वर्तते यत् आधुनिकाः विद्यार्थिनः एतेषां नियमानां पालने ध्यानं न ददते। अनेके तु एतेषां नियमानाम् उल्लंघने एव आत्मनः गौरवं मन्यन्ते। यदि परीक्षार्थिनां किमपि नियमविरुद्धं कार्यं दृष्ट्वा कश्चित् निरीक्षकः तत्र हस्तक्षेपं करोति तदा तेन सह ते कलहं कुर्वन्ति। अवसरं लब्ध्वा तदुपरि आक्रमणम् अपि कुर्वन्ति। कदाचित् हत्यामपि कुर्वन्ति। एतादृशी घटना सम्प्रति साधारणी संवृता[१७] वर्तते। परन्तु छात्रसमाजस्य कृते अयं महान् लज्जायाः विषयः अस्ति। ईदृशं निन्दनीयं कार्यं कृत्वा छात्राः न केवलम् आत्मनः एव हानिं कुर्वन्ति प्रत्युत सम्पूर्णस्य छात्रसमाजस्य मुखं कलङ्कयन्ति।

विद्यार्थिनाम् अस्य दोषस्य प्रधानं कारणम् इदं वर्तते यत् आधुनिकाः छात्राः अध्ययने तु परिश्रमं कर्तुं न इच्छन्ति परन्तु उत्तीर्णा भवितुम् अवश्यम् इच्छन्ति। अत एव ते उत्तीर्णतायै[१८] अनुचितानाम् उपायानाम् अवलम्बनं कुर्वन्ति। तत्र च यदि कश्चिद् बाधकः भवति तदा तस्य उपरि कुपिताः भूत्वा तेन सह अनेकान् दुर्व्यवहारान् कुर्वन्ति। अनेके चौर्य-कुशलाः छात्राः अनुचितैः उपायैः परीक्षासु सफलतां प्राप्नुवन्ति अपि। तथापि अयं मार्गः विद्यार्थिनां कृते श्रेयस्करः नास्ति। परीक्षार्थिभिः परीक्षानियमानां पालनं विधाय परीक्षायाः मर्यादा रक्षणीया।

---

१७—हो गई। १८—उत्तीर्ण होने के लिए।

तथा च अध्ययने परिश्रमः कर्तव्यः यथा अनुचितोपायानाम् अवलम्बनं विनैव ते परीक्षायां सफलतां प्राप्नुयुः[१९]।

---

## २८—यात्रा

यात्राशब्दस्य साधारणः अर्थः "गमनम्" अस्ति। तथापि अयं शब्दः दूरगमने एव प्रचलितः वर्तते। यदा कश्चित्[१] मनुष्यः एकस्मात् स्थानात् कस्मिंश्चित्[२] दूरवर्तिनि स्थाने गच्छति तदा स यात्रां करोति इति कथ्यते। अत एव ये जनाः दूरदेशेषु भ्रमणार्थं गच्छन्ति ते "यात्रिणः" इति उच्यन्ते।

यात्रा अनेकैः उद्देश्यैः विधीयते[३]। केचन जनाः तीर्थेषु भ्रमणार्थं यात्रां कुर्वन्ति। केचन जनाः ऐतिहासिकस्थानानां निरीक्षणार्थं[४] कुर्वन्ति। अन्ये जनाः प्राकृतिकानां दृश्यानां दर्शनाय यात्रां कुर्वन्ति। एवमेव केचन विद्योपार्जनाय, केचन धनोपार्जनाय, केचन धर्मप्रचाराय, केचन विजयाय तथा केचन यशःप्राप्तये च यात्रां कुर्वन्ति।

यात्रायाः मानवजीवने बहु महत्त्वं वर्तते। मनुष्यः केवलम् एकस्मिन् स्थाने स्थित्वा[५] सम्यक्[६] उन्नतिं कर्तुं न शक्नोति। यदा स दूर-दूरदेशेषु गच्छति, अनेकेषु स्थानेषु भ्रमति, अनेकैः पुरुषैः सह मिलति तथा अनेकानि च मनुष्यकृतानि आश्चर्य-

---

१९—पा जायें।

१—कोई। २—किसी। ३—की जाती है। ४—देखने के लिए। ५—रहकर। ६—अच्छी तरह।

जनकानि वस्तूनि स्वनेत्राभ्यां पश्यति तदा तस्य बुद्धेः विकाशो भवति, तस्य हृदये महत्त्वाकांक्षाः[७] उत्पद्यन्ते, तस्य कर्तृत्वशक्तिः[८] वृद्धि गच्छति, तस्य उत्साहो वर्धते तथा स कामपि विशेषरूपेण उल्लेखनीयाम्[९] उन्नतिं करोति।

एतदपेक्षया यात्रया अन्ये अपि अनेके लाभाः सम्भवन्ति। मनुष्यः यदा स्वस्थानं परित्यज्य दूरदेशं गच्छति तदा तस्य व्यवहारे कुशलता आयाति[१०], परिचयः वर्द्धते, सहनशीलता आगच्छति, मनोविनोदः जायते, तथा कष्टसहिष्णुता, आत्म-निर्भरता चेत्यादयः गुणाः विकसिताः भवन्ति।

प्राचीनकाले दूरयात्रासु महती कठिनता आसीत्। मार्गाः विकटाः आसन्। वाहनानां[११] सुलभता न आसीत्। समयः श्रमः द्रव्यं च अत्यधिकं लगति स्म। तथापि बहवः जनाः जलमार्गेण स्थलमार्गेण च देशदेशान्तरेषु भ्रमणं कुर्वन्ति स्म। बहवः विदेशवासिनः पर्यटकाः[१२] नानानदीनदान् उत्तीर्य[१३], गिरिपर्वतान् उल्लंघ्य[१४], समुद्रान् च अतिक्रम्य अस्माकं देशे भ्रमणार्थम् आगतवन्तः[१५] सन्ति। अस्माकं देशस्य अपि बहवः जना ऋषयः मुनयः वणिजः[१६] विद्वांसः धर्मप्रचारकाः, राजानः राजदूताश्च विदेशेषु गतवन्तः[१७] सन्ति। एवं च मानवसमाजे दूरयात्रायाः परम्परा बहोः कालात् आगच्छति। दूरयात्रा उन्नतिशील-मानवसमाजस्य कृते जीवनस्य एकः आवश्यकः कार्यक्रमः अस्ति।

---

७—महान् बनने की इच्छायें। ८—काम करने की शक्ति। ९—उल्लेख करने योग्य। १०—आती है। ११—सवारियों की। १३—पर्यटन करने वाले, घूमने वाले। १३—तैर कर, पार कर। १४—लाँघ कर। १५—आये। १६—व्यापारी। १७—गये।

इदानीं तु यात्रा अतीव सरला संवृत्ता वर्तते। मार्गाणां यानानां वा काचित् न्यूनता नास्ति। द्रव्ये सति अल्पकालेन जनः समस्ते अपि संसारे भ्रमणं कर्तुं शक्नोति। जलमार्गेण, स्थलमार्गेण, आकाशमार्गेण वा मनुष्यः स्वच्छन्दं भ्रमणं कर्तुं पारयति अभीष्टं च कार्यं साधयितुं शक्नोति।

अतः यात्रायाः सर्वेषु साधनेषु विद्यमानेषु मनुष्यैः अवश्यमेव यात्राद्वारा जायमानानां[१८] विविधलाभानां प्राप्तये प्रयत्नः कर्तव्यः। साधनसम्पन्नाः अपि बहवः जनाः आलस्येन, कार्पण्येण, कष्टभयेन गृहकार्यहानि-भयेन वा गृहाद् बहिः न निस्सरन्ति। ते गृहे स्थिताः एव परमं सन्तोषं भजन्ते। परन्तु इमां कूपमण्डूक-सदृशीं[१९] वृत्तिं[२०] परित्यज्य आत्मनः विकासाय अवश्यमेव सर्वैः जनैः यथासम्भवं भ्रमणं विधेयम्।

---

## २६—कृषकाणां दिनचर्या

ये कृषिं[१] कुर्वन्ति ते कृषकाः[२] कथ्यन्ते। अस्माकं देशः कृषिप्रधानः देशः अस्ति। अत्र कृषकाणां संख्या अधिका वर्तते। कृषकाः कृषिं कृत्वा जीवनोपयोगीनि बहूनि वस्तूनि उत्पादयन्ति[३]। तैः एव वस्तुभिः सर्वे जनाः जीवन्ति। अतः समाजस्य जीवनं धारणं च कृषकाणाम् एव उपरि निर्भरं वर्तते।

---

१८—होने वाले। १९—कुएँ के मेढक के समान अर्थात् संकुचित। २०—व्यवहार।

१—खेती। २—किसान। ३—उत्पन्न करते हैं।

कृषिः महता परिश्रमेण भवति। अत एव कृषकाणां दिनचर्या अतीव कठोरा श्रममयी च भवति। तेषां जीवने विश्रामाय मनोरञ्जनाय वा अतीव अल्पः अवसरः लभ्यते। कृषकाः प्रातःकालात् आरभ्य सायंकालपर्यन्तं कठिनं परिश्रमं कुर्वन्ति। रात्रौ अपि ते पूर्णरूपेण विश्रामाय शयनाय वा समयं न लभन्ते।

यदा रात्रिः किञ्चित् अवशिष्टा[४] भवति तदैव कृषकाः उत्तिष्ठन्ति। उत्थाय ते रामनाम कथयन्ति। ततः गोष्ठं[५] गत्वा तत्र कीले[६] बद्धान् पशून् मोचयन्ति[७]। मोचयित्वा च तान् पशून् ते भोजनस्थाने बध्नन्ति घास-बुसादिकं[८] च खादयन्ति[९]। ये पशवः केवलं घासं बुसं वा न खादन्ति तेभ्यः ते हरितघासं[१०] तुषं[११] कल्कादिकं[१२] च ददते तथा लवणेन सह सक्तून्[१३] अपि पाययन्ति।[१४]

एवं च महता मनोयोगेन पशून् खादयित्वा, स्वयं च किञ्चित् प्रातराशं[१५] कृत्वा कृषकाः स्वकीये आवश्यके सामयिके च कार्ये संलग्नाः भवन्ति।

कृषकाणां कार्याणि ऋतोः अनुसारं भिन्नभिन्नानि भवन्ति। यदा वपनस्य कालः[१६] आगच्छति तदा ते कुद्दालेन[१७] क्षेत्राणि[१८] खनन्ति[१९]। हलेन क्षेत्राणि कर्षन्ति[२०]। द्वितीया कुर्वन्ति[२१] तृतीया[२२] कुर्वन्ति। शम्बा कुर्वन्ति[२३]। क्षेत्रेभ्यः कुश-कण्टका-

४—बाकी। ५—घोठा। ६—खूँटा। ७—खोलते हैं। ७—घास, भूसा वगैरह। ९—खिलाते हैं। १०—हरी घास। ११—भूसी। १२—खरी आदि। १३—सत्तू। १४—पिलाते हैं। १५—कलेवा, जलपान। १६—बोने का समय। १७—कुदारी से, फावड़े से। १८—खेतों को। १९—कोड़ते हैं। २०—जोतते हैं। २१—दुबारा जोतते हैं। २२—तिबारा जोतते हैं। २३—सोमरा करते हैं।

दीनि अपसारयन्ति[२४]। ततः शुभे मुहूर्ते बीजानि वपन्ति[२५]। बीजानि उप्त्वा[२६] क्षेत्रं कोटिशेन[२७] समीकुर्वन्ति[२८]। ततः मध्ये क्षेत्राणि सिञ्चन्ति[२९]। घास-तृणादिकं शोधयन्ति[३०]। मञ्चेषु[३१] उपविश्य क्षेत्राणि च रक्षन्ति।

यदा शस्यं परिपक्वं भवति तदा कर्तनस्य[३२] कार्यं प्रारभ्यते। सर्वे जनाः हस्ते दात्राणि[३३] गृहीत्वा क्षेत्रेषु गच्छन्ति। तेषु केचित् शस्यानि[३४] लुनन्ति[३५], केचित् पुञ्जानि[३६] बध्नन्ति[३७], केचित् च तानि खले[३८] आनयन्ति[३९]। खले आनीतेषु सर्व-सस्येषु तत्र मेधिं[४०] बद्ध्वा तथा अनेकान् बलीवर्दान् दामनि[४१] योजयित्वा शस्यानां कण्डनं[४२] भवति। ततश्च शूर्पादिभिः[४३] उत्पवनं[४४] भवति। अनन्तरं विशुद्धं धान्यं गृहे आनीयते।

वर्षाकाले कृषकाः धान्यानि वपन्ति। ततः पुरुषाः तथा स्त्रियः उभये अपि धान्यं रोपयन्ति। धान्यारोपणकाले स्त्रियः सामूहिकरूपेण रोपणगीतानि गायन्ति। तानि गीतानि अतीव मनोहराणि भवन्ति।

मध्याह्नकाले अनेके कृषकाः क्षेत्रेषु एव भोजनं कुर्वन्ति। तेषां स्त्रियः यथोपस्थितं भोजनं जलं च क्षेत्रेषु नयन्ति। ततः ते

---

२४–हटाते हैं। २५–बोते हैं। २६–बोकर। १७–हेंगी से। २८–बराबर करते हैं। २९–सींचते हैं। ३०–सोहते हैं, साफ करते हैं। ३१–मचानों पर। ३२–काटने का। ३३–हँसिया। ३४–फसल। ३५–काटते हैं। ३६–पूँज। ३७–बाँधते हैं। ३८–खलिहान में। ३९–पहुँचाते हैं। ४०–नेह। ४१–दँवरी में। ४२–दँवरी। ४३–सूप आदि से। ४४–ओसवनी।

तत्रैव भोजनं कुर्वन्ति विश्रामं च। तदनन्तरं पुनः कार्ये संलग्नाः भवन्ति।

उपरिलिखित-कार्यातिरिक्तं घासादीनां समाहरणस्य[४५] अपि महान् भारः कृषकाणां शिरसि भवति। ते स्वभोजनापेक्षया पशूनां भोजनस्य प्रबन्धं प्रथमम् आवश्यकं मन्यन्ते। तदर्थं प्रतिदिनम् अनेके पुरुषाः स्त्रियः तथा बालकाः क्षुरप्रं[४६] पिटकं[४७] च आदाय घासकर्तनाय[४८] इतस्ततः गच्छन्ति। कदाचित् वंशपत्राणि[४९] त्रोटयन्ति[५०]। यदा इक्षूणां[५१] कर्तनस्य कालः समायाति तदा इक्षुपत्राणां कर्तनाय कृषकाः माघमासस्य भयङ्करे शीतकाले एकं साधारणं कर्पटं[५२] शरीरे धृत्वा कम्पमानाः इक्षुक्षेत्रेषु गच्छन्ति। एवं महता श्रमेण कष्टेन च पशूनाम् आहारस्य प्रबन्धं कुर्वन्ति।

इदं सर्वं कार्यं दिने सम्पाद्य[५३] सायंकाले कृषकाः किञ्चित् विश्रामं कर्तुं समयं लभन्ते। तस्मिन् समये केचित् विश्रामं कुर्वन्ति, केचित् जलपानं कुर्वन्ति, केचित् आवश्यकवस्तूनि लवणतैलादीनि क्रेतुं[५४] विपणौ[५५] गच्छन्ति, केचित् च अवशिष्टानि कार्याणि एव सम्पादयन्ति। बहवः स्नानम् अपि सायङ्काले एव कुर्वन्ति। ततः सायङ्कालस्य कृत्ये समाप्ते पुनः रात्रौ बहुविलम्बपर्यन्तं विविधानि गृहकार्याणि सम्पाद्य भोजनं च कृत्वा शयनं कुर्वन्ति।

इदं कृषकाणां दिनचर्यायाः सामान्यं स्वरूपं वर्तते। वस्तुतस्तु कृषकाणां बहूनि कार्याणि भवन्ति। ते अहोरात्रं परिश्रमं

---

४५—इकट्ठा करने का। ४६—खुरपी। ४७—खाँची। ४८—घास काटने के लिए। ४९—बाँस के पत्ते। ५०—तोड़ते हैं। ५१—ईखों के। ५२—कपड़ा। ५३—करके। ५४—खरीदने के लिए। ५५—बाजार में।

कुर्वन्ति। शीतम् आतपं[५६] वा न गणयन्ति। बहूनि कष्टानि सहन्ते। तथापि तेषां कार्यस्य समाप्तिः न भवति।

एतादृशं घोरं परिश्रमं कुर्वाणाः[५७] अपि कृषकाः सुखिनः न सन्ति इति दुःखस्य विषयो वर्तते।

---

## ३०—द्विचक्रिका ( बाइसिकिल )

येन मनुष्याः यात्रां कुर्वन्ति तद् 'यानम्'[१] इति कथ्यते। यानानि बहुविधानि भवन्ति। तेषु एव यानेषु द्विचक्रिका अपि एकं यानं वर्तते। अस्य समाजे सम्प्रति महान् प्रचारः वर्तते।

अस्मिन् याने द्वे चक्रे भवतः। अतएव अस्य नाम द्विचक्रिका इति कथ्यते। एकं चक्रम् अग्रे भवति तथा एकं चक्रं पृष्ठे भवति। मध्ये एकः लौहदण्डः भवति येन उभे[२] अपि चक्रे सम्बद्धे[३] तिष्ठतः[४]। द्विचक्रिकानाम् एका लौहशृङ्खला[५] अपि भवति या पादके[६] पृष्ठचक्रे च संलग्ना भवति। यदा आरोहकः[७] आसने उपविश्य पादकं पादाभ्याम् आहन्ति[८] तदा लौहशृङ्खला चलति। तस्याः चलनेन चक्रे अपि चलतः।

अग्रिमे चक्रे द्वे हस्तके[९] भवतः। आरोही ते उभे हस्तके हस्ताभ्यां गृहीत्वा तथा वामेन पादकम् आक्रम्य[१०] आसने

५६—धूप। ५७—करते हुए।

१—सवारी। २—दोनों। ३—एक में जुड़े हुए। ४—रहते हैं। ५—लोहे की बनी हुई चैन। ६—पैडिल। ७—सवार, चढ़ने वाला। ८—मारता है। ९—हैण्डिल। १०—दबाकर।

उपविशति। ततश्च पादाभ्यां द्विचक्रिकां चालयति। आरोही इच्छानुसारं मन्द-मन्दं वेगेन च द्विचक्रिकां चालयितुं शक्नोति।

द्विचक्रिका वेगेन चलति। अतः अग्रे चलतां जनानाम् अपसारणाय[११] पूर्वमेव सूचनाप्रदानस्य आवश्यकता भवति। तदर्थं द्विचक्रिकायाः दक्षिणे हस्तके एका घण्टिका आबद्धा[१२] भवति। तां एव घण्टिकां वादयित्वा[१३] आरोहिणः[१४] अग्रे चलतः पथिकान् अपसर्तुं[१५] सूचनां ददते।

यदि कश्चिद् वधिरः पथिकः घण्टिकावादनं न श्रृणुयात्, अथवा कश्चित् अबोधः बालकः मार्गे आपतेत्[१६] अथवा अन्यैः जनैः सह संघर्षस्य सम्भावना स्यात्तदा चलन्त्याः द्विचक्रिकाया अवरोधनम्[१७] अपि परमावश्यकं भवति। एतदर्थं द्विचक्रिकायां एकं गमनप्रतिरोधकं[१८] यन्त्रशकलं[१९] भवति। तद् उभयोः अपि चक्रयोः सम्बद्धं भवति। तद्द्वारा आरोहिणः चलन्तीं द्विचक्रिकाम् अवरुध्य[२०] नीचैः अवतरन्ति[२१] तथा दुर्घटनातः आत्मनः परस्य च रक्षां कुर्वन्ति।

अयमेव द्विचक्रिकायाः सामान्यः परिचयः अस्ति। अधिकांशजनानां कृते इदं यानं महत् उपकारकं वर्तते। अस्मिन् अनेके लाभाः सन्ति। प्रथमन्तु इदं बहु महर्घं[२२] नास्ति। पुनश्च एतद् द्वारा अल्पसमयेन बहुदूरपर्यन्तं गन्तुं तथा आगन्तुं शक्यते। एकः समर्थः पुरुषः अनेन यानेन एकेन दिनेन २०——२५ क्रोशपर्यन्तं गन्तुं पारयति। तृतीयतः एतस्य रक्षणे प्रतिदिनं

---

११—हटाने के लिए। १२—बँधी हुई, लगी हुई। १३—बजाकर। १४—सवार। १५—हटने के लिए। १६—आ पड़े। १७—रोकना। १८—चाल रोकने वाला। १९—पुर्जा। २०—रोककर। २१—उतर जाते हैं। २२—महँगा।

कश्चिद् व्ययः अपि नास्ति। न इदं अश्वादिवत् घासं भक्षयति न च मृत्तरवत्[२३] तैलमेव पिबति। न वा एतस्य सेवायै कस्यचित् भृत्यस्य प्रयोजनं भवति। चतुर्थतः एतस्मात् किमपि भयं अपि न भवति। न इदं बलीवर्द[२४] इव शृङ्गाभ्यां हन्ति न च अश्व इव दन्तैः दशति[२५]। हस्ती इव भयानकः अपि न भवति। पञ्चमतः एतद्द्वारा अग्रे पृष्ठे च धृत्वा बहूनि वस्तूनि अपि जनः नेतुं शक्नोति तथा एकं द्वयं वा जनमपि वोढुं[२६] शक्नोति।

इमे सर्वे द्विचक्रिकायाः जायमानाः लाभाः सन्ति। एभिः कारणैः येषां जनानां कृते सर्वदा इतस्ततः गमनागमने आवश्यके भवतः तेषां कृते एतत्समानं सुविधाजनकं किमपि अन्यद् यानं नास्ति। अनेन यानेन छात्राः, अध्यापकाः, पर्यटकाः[२७], प्रचारकाः, सामाजिकाः कार्यकर्तारः, साधारणाः अधिकारिणः, भृत्याः, चिकित्सकाः, पत्रवाहकाः,[२८] तथा अन्ये च जनाः महता सुखेन सौविध्येन च यथेच्छं भ्रमन्ति स्वकार्यं च सम्पादयन्ति। यदि इदं यानं न अभविष्यत् तर्हि गमनागमनयोः महती असुविधा अभविष्यत्।

अतः येन इदं यानं निर्मितं तेन जगतः महान् उपकारः कृतः। अत एव नमः तस्मै महापुरुषाय अनेक-जन-जीवन-सहायकाय।

---

२३-मोटर की तरह। २४-बैल। २५-काटता है। २६-ढोने को
२७-घुमक्कड़। २८-चिट्ठी ढोनेवाले, डाकिया।

## ३१—वाष्पशकटम् ( रेलगाड़ी )

यात्रायाः यानि अनेकानि साधनानि सम्प्रति प्रचलितानि सन्ति तेषु एकं साधनं वाष्पशकटम् अपि अस्ति। इदं साधनं सर्वापेक्षया श्रेष्ठतरं सुगमतरं च अस्ति।

इदं शकटं[१] वाष्पद्वारा[२] चलति अत एव वाष्पशकटं कथ्यते। एतस्मिन् अग्रे शकटवाहकं[३] वाष्पयन्त्रं[४] भवति। तत्पश्चात् परस्परं सम्बद्धाः[५] अनेकाः सम्पुटकाः[६] भवन्ति यान् आरुह्य[७] मनुष्याः यात्रां कुर्वन्ति। एषु सम्पुटकेषु जनानाम् उपवेशनाय वस्तूनां स्थापनाय च स्थानानि निर्मितानि भवन्ति। प्रत्येकं सम्पुटके प्रवेशाय निर्गमनाय च उभयोः[८] पार्श्वयोः[९] द्वाराणि तथा वायोः प्रकाशस्य च आगमनाय अनेकानि वातायनानि[१०] अपि भवन्ति। प्रतिसम्पुटकं विद्युत्प्रकाशस्य[११] विद्युद्व्यजनस्य[१२] तथा मूत्रपुरीषोत्सर्ग-स्थानस्य[१३] च व्यवस्था भवति।

इदं वाष्पशकटं भूमौ न चलति अपितु भूम्याः उपरि निर्मिते पट्टद्वयात्मके[१४] लौहमार्गे[१५] चलति। प्रत्येकं सम्पुटकस्य नीचैः चत्वारि चक्राणि भवन्ति। तानि चक्राणि

---

१—गाड़ी। २—भाफ द्वारा। ३—गाड़ी ढोने वाला। ४—इञ्जिन। ५—जुड़े हुए। ६—डिब्बे। ७—चढ़कर। ८—दोनों। ९—बगल। १०—खिड़कियाँ। ११—बिजलीबत्ती। १२—बिजली का पंखा। १३—पेशाब और पैखाने का स्थान। १४—दो पटरी वाले। १५—लोहे के मार्ग पर।

भूम्याः उपरि विच्छादितयोः[१६] लौहपट्टयोः उपरि चलन्ति। इमौ लौहपट्टौ अतीव दृढौ पुष्टौ च भवतः।

वाष्पशकटस्य विरामाय[१७] त्रिचतुरेषु क्रोशेषु एकैकम् अवस्थानं[१८] भवति। तत्र नियतसमये वाष्पशकटम् आगत्य विरमति। शकटस्य आगमनात् पूर्वत एव यात्रिणः चिटिकां[१९] गृहीत्वा शकटे आरोहणाय[२०] सन्नद्धाः तिष्ठन्ति। यदा शकटम् आगत्य अवस्थाने विरमति तदा सर्वे यात्रिणः यथास्थानम् आरोहन्ति। ये च तत्र अवरोहकाः[२१] भवन्ति ते तत्र अवरोहन्ति[२२]। अन्ये च यात्रिणः तत्र अवरुह्य[२३] खाद्यवस्तूनि क्रीणन्ति[२४], जलपानं कुर्वन्ति, इतस्ततः भ्रमणेन मनोविनोदं कुर्वन्ति तथा आयासं[२५] दूरीकुर्वन्ति। ततः विरामसमये समाप्ते पुनः शकटी अग्रिमं अवस्थानं प्रति प्रस्थिता भवति। सम्पूर्णे देशे एवं प्रकारेण अहोरात्रं[२६] वाष्पशकटस्य गमनागमनक्रमः प्रचलति।

इदं वाष्पशकटं लोकानां कृते यात्रायै सर्वोत्तमम् साधनं वर्तते। अस्मिन् याने अपेक्षितानि सर्वाणि सुखसाधनानि विद्यमानानि भवन्ति। अद्यावधि[२७] याः काश्चन त्रुटयः आसन् तासां पूर्तये अपि वर्तमानप्रशासनस्य[२८] सञ्चारविभागः[२९] पूर्णतया चेष्टमानः वर्तते। सम्प्रति अवस्थाने अवस्थाने जलस्य, मृत्तिकायाः, विश्रामागारस्य, छायायाः, प्रकाशस्य च समुचितः प्रबन्धः क्रियमाणः वर्तते। शकटे अपि प्रकाशस्य, व्यजनस्य,

---

१६–बिछाये हुए। १७–रुकने के लिए। १८–स्टेशन। १९–टिकट। २०–चढ़ने के लिए। २१–उतरने वाले। २२–उतरते हैं। २३–उतर कर। २४–खरीदते हैं। २५–थकावट। २६–दिन-रात। २७–आज तक। २८–सरकार का। २९–रेलवे विभाग।

शयनस्थानस्य, स्वच्छतायाः, जलस्य च पूर्वापेक्षया शोभना व्यवस्था क्रियमाणा वर्तते। दूरयात्रिणां, छात्राणां, शिक्षकाणां तथा भृतिकराणां[३०] जनानां शुल्केऽपि सुविधा विहिता वर्तते। अग्रे च अनेकानेक-सुखसौविध्य-सम्पादनस्य योजना वर्तते इति समाचारपत्रेषु पश्यामः।

वाष्पशकटद्वारा यात्राकरणे महतः आनन्दस्य अपि अनुभवः भवति। सुदूरयात्रायां यदा वयं नानाविधानि वस्तूनि पश्यामः, नानाविधैः पुरुषैः सह मिलामः, नानाविधाः भाषा शृणुमः, नानाविधाः वेषभूषाः अवलोकयामः तथा महता वेगेन वर्धमाने बाष्पशकटे वातायनेन यदा क्षणे क्षणे नूतननूतनानां नदनदीनाम्, गिरिपर्वतानाम्, तरुलतानाम्, पशुपक्षिणाम्, तथा ग्रामनगराणां साक्षात्कारं कुर्मः तदा महान् आनन्दः अनुभूयते। तस्मिन् समये वाष्पशकटं परित्यज्य अन्यत्र गन्तुम् इच्छा न भवति।

परन्तु एभिः गुणैः सह वाष्पशकटे केचन दोषाः अपि सन्ति। यथा—वाष्पशकटेषु परस्परं संघर्षः, तेषां पट्टाद्[३१] अवतरणम्[३२], गमनागमनसमयस्य उल्लंघनम्, चौराणाम् उपद्रवः, मेलादिषु महान् सम्मर्दः[३३] तथा क्वचित्-क्वचित् जलादीनां दुर्व्यवस्था चेति। यदि इमा बाधाः न स्युः तदा वाष्पशकटं यात्रिणां कृते महत् सुखकरं गमनसाधनं भविष्यति।

———

३०—नौकरी करने वाले। ३१—पटरी से। ३२—उतरना। ३३—भीड़।

## ३२—रामलीला

रामलीला श्रीरामचन्द्रस्य अशेष[१] चरितानाम् एकः अभिनयः[२] अस्ति। अस्याः अस्माकं देशे महान् प्रचारः अस्ति। भारतस्य प्रायः सर्वेषु नगरेषु रामलीलायाः अभिनयः भवति। अनेके ग्रामीणाः[३] अपि स्वस्वग्रामेषु रामलीलायाः आयोजनं कुर्वन्ति।

रामलीला प्रायेण आश्विनमासे भवति। रामलीलायां रामायणे वर्णितस्य सम्पूर्णस्य रामचरितस्य अभिनयः भवति अतः अस्याः पूर्तौ[४] बहूनि दिनानि लगन्ति। यत्र जानानां साधनानां च न्यूनता[५] न भवति तत्र एकमासात् अपि अधिककालपर्यन्तं रामलीला प्रचलति। रामलीलायाः समस्तः अभिनय संवादश्च श्रीरामचरित-मानसानुसारं भवति। एकः वाचकः रामायणं वाचयति[६] तदनुसारं च सर्वाणि पात्राणि स्वं-स्वं कार्यं सम्पादयन्ति। मध्ये-मध्ये आवश्यकतानुसारं गीत-वाद्यादीनाम् अपि कार्यक्रमः संचलति। समाजे मनोरञ्जनेन सह धार्मिकशिक्षायाः प्रचारः रामलीलायाः प्रधानम् उद्देश्यं वर्तते।

सामान्यजनतायाः हृदये नीरसेन ज्ञानोपदेशेन तथा धार्मिक-भावना न उत्पद्यते[७] यथा सरसेन अभिनयादिना उत्पद्यते। धर्मस्य शुभम् अधर्मस्य च अशुभं परिणामं दृष्ट्वा दर्शकानां हृदये स्वतः एव धर्माचरणं प्रति अभिरुचिः भवति। अतएव नाट्यद्वारा

---

१—सम्पूर्ण। २—नाटक। ३—ग्रामवासी, देहाती। ४—पूरा करने में। ५—कमी। ६—बाँचता है। ७—उत्पन्न होती है।

मनोरञ्जनेन सह सुशिक्षाप्रचारस्य परस्परा बहोः कालात् आगच्छति। रामलीला अपि ईदृशमेव एकं साधनं वर्तते येन जनतायाः मनोरञ्जनम् अपि भवति तथा श्रीराम-सीता-लक्ष्मण-भरत-महावीर-प्रभृतीनां महापुरुषाणां जीवनेन अत्युत्तमा शिक्षा अपि मिलति।

मानवसमाजस्य लोक-परलोक-हिताय यथा सर्वाङ्गपूर्णा शिक्षा श्रीरामादीनाम् आदर्शचरितेभ्यः मिलति न तथा अन्येन केनापि उपायेन। पुत्रस्य पित्रा तथा मात्रा सह, भार्यायाः पत्या सह, स्नुषायाः[८] श्वश्रा[९] सह, सेवकस्य स्वामिना सह, प्रजायाः राज्ञा सह, मनुष्यस्य च मनुष्येण सह कीदृशः व्यवहारः समुचितः इति विषये रामचरितात् उत्कृष्टतमा शिक्षा लभ्यते। अनया दृष्ट्या भारतीयसमाजे रामायणस्य रामलीलायाश्च महती उपयोगिता अस्ति।

परन्तु खेदस्य अयं विषयः वर्तते यत् सम्प्रति भारतीय-जनतायाः यथा सिनेमादिषु अनुरागः वर्तते तथा परम्परागतेषु रामलीलादिषु अभिनयेषु न वर्तते। अतएव ते इमानि प्राचीनानि मनोरञ्जन-साधनानि उपेक्षादृष्ट्या अवलोकयन्ति। परन्तु एषा प्रवृत्तिः देशस्य कृते कल्याणकरी नास्ति। रामलीलाद्वारा समाजस्य यत् कल्याणं सम्भवति यत् सिनेमाद्वारा जन्मशतेन अपि न सम्भवति। अतः प्राचीनेषु शिक्षाप्रदेषु मनोरञ्जन-साधनेषु पुनः ध्यानदानस्य तेषां बहुरूपेण प्रचारस्य च महती आवश्यकता वर्तते। विशेषतश्च अस्मिन् धर्मस्य नैतिकतायाश्च भयङ्करे ह्राससमये।

---

८—पुत्रवधू का। ९—सास से।

## २३–कन्दुक-क्रीडा

कन्दुकेन[१] या क्रीडा भवति सा कन्दुकक्रीडा कथ्यते। क्रीडाः द्विविधा भवन्ति। गृहक्रीडाः बहिःक्रीडाश्च। गृहे उपविश्य याः क्रीडाः क्रीडयन्ते[२] ताः गृहक्रीडा इति उच्यन्ते। गृहाद् बहिः विस्तृते क्रीडाप्रांगणे याः क्रीडाः क्रीडयन्ते ताः बहिः क्रीडा इति उच्यन्ते। खेलनम्, कूर्दनम् धावनम्, उत्प्लवनम्[३], कपर्दी[४], कन्दुकम्, पादकन्दुकम्[५] तथा वीटा[६] इत्यादयः क्रीडा बहिः क्रीडाः सन्ति।

कन्दुकक्रीडा अस्माकं देशस्य अतिप्राचीन तथा अतिप्रिया क्रीडा अस्ति। संस्कृतसाहित्यस्य अनेकेषु ग्रन्थेषु स्त्रीपुरुषाणां कन्दुकक्रीडायाः अतीव मनोहरं वर्णनं वर्तते। प्राचीनसमये कन्दुकक्रीडा-विषये "कन्दुकतन्त्र" नामक एकः महान् ग्रन्थः अपि आसीत्। अनेन ज्ञायते यत् अस्माकं देशस्य क्रीडासु कन्दुकक्रीडायाः कियत् महत्त्वपूर्णं स्थानम् आसीत्।

अस्मिन् अपि समये कन्दुकक्रीडायाः महान् प्रचारः अस्ति। ग्रामे-ग्रामे, गृहे-गृहे, विद्यालये-विद्यालये च सर्वत्र बालकाः विद्यार्थिनश्च कन्दुकेन पादकन्दुकेन च खेलन्ति। अस्य खेलस्य प्रतियोगितताया अपि अनेकेषु स्थानेषु प्रतिवर्षम् आयोजना भवति यत्र महता उत्साहेन बहवः खेलकाः दर्शकाश्च सम्मिलिताः भवन्ति।

---

१–गेंद से। २–खेली जाती है। ३–उछलना। ४–कबड्डी। ५–फुटबाल। ६–क्रिकेट।

अस्मिन् खेले खेलकानां द्वौ दलौ भवतः। एकस्मिन्-एकस्मिन् दले दश-दश खेलकाः भवन्ति। उभयोः दलयोः मध्ये एकः मध्यस्थः भवति यः क्रीडासमये सुव्यवस्थां करोति, अव्यवस्थां वारयति, नियमनिर्देशं करोति तथा विवादे समुपस्थिते मध्यस्थतां करोति।

कन्दुकक्रीडया तथा अन्याभिः अपि क्रीडाभिः क्रीडकानां महान् लाभः भवति। क्रीडने धावनादिना शरीरस्य बलं वर्द्धते, स्फूर्तिः आयाति, शक्तिसञ्चयः भवति, श्रमशक्तिः वृद्धिं गच्छति, अङ्ग-प्रत्यङ्गानि च सुपुष्टानि भवन्ति। क्रीडनेन शारीरिकशक्त्या सह बुद्धेः अपि विकाशः भवति। क्रीडने हि परपक्षस्य पराजयाय पदे-पदे चतुरतायाः, निपुणतायाः, सूक्ष्मदर्शितायाः तथा प्रत्युत्पन्न-मतित्वस्य आवश्यकता भवति। एतदतिरिक्तं क्रीडनेन अन्येषामपि मानवोचितगुणानां विकासाय अवसरो लभ्यते। ते च गुणाः इमे सन्ति। यथा—आज्ञापालनम्, अनुशासनप्रियता, परस्परं प्रीतिः, कष्टसहिष्णुता, सहनशीलता, साहसम्, पारस्परिकः सहयोगः, व्यवहार-कुशलता च इति। मनोरञ्जनं च क्रीडानां सर्वसाधारणः लाभः अस्ति।

अनेन प्रकारेण कन्दुकादिक्रीडाः मानवसमाजस्य, विशेषरूपेण नवयुवकानां विद्यार्थिनां च महान्तं उपकारं कुर्वन्ति। सर्वे बालकाः युवानः विद्यार्थिनश्च यदि क्रीडाकुशला भवेयुः तदा तेषां समाजस्य च स्वास्थ्यदृष्ट्या महान् लाभो भविष्यति इति सुनिश्चितं वर्तते।

———

## ३४—डाक-विभागः

राज्यद्वारा जनतायाः हिताय यावन्तः[1] विभागाः सञ्चालिताः सन्ति तेषु डाक-विभागः अपि एकः जनतायाः कृते महान् हितकारी विभागः अस्ति। यदि अयं विभागः न स्यात् तर्हि जनताया जीवने महती कठिनता असुविधा च आपद्येत[2]।

डाकविभागस्य चतुःपञ्च कार्याणि मुख्यतमानि भवन्ति। यथा—डाकपत्राणां प्रेषणम्[3], तन्त्रीद्वारा[4] अतिशीघ्रतया समाचाराणां प्रेषणम्, रूप्यप्रेषद्वारा[5] रूप्यकाणां प्रेषणव्यवस्था, राजेष्ट्रिकरणम्[6] तथा जनतायाः द्रव्यस्य संरक्षणं च।

इमानि सर्वाणि अपि कार्याणि जनतायाः कृते नितान्तम् आवश्यकानि सन्ति। तथाहि—लोके बहवः जनाः भिन्न-भिन्न-कार्यवशात् दूरं दूरं गच्छन्ति, दूरदेशेषु च निवसन्ति। अनेके जनाः अनेकवर्षपर्यन्तं परदेशे एव निवासं कुर्वन्ति। यदि डाकद्वारा पत्रप्रेषणस्य व्यवस्था न अभविष्यत्[7] तर्हि कथं ते स्वगृहस्य समाचारम् अज्ञास्यन्[8] कथं वा स्वकीयं समाचारं गृहजनेभ्यः अज्ञापयिष्यन्[9]? अथ च यदि कदाचित् काचित् दुर्घटना जायते, त्वरितं वा क्वचित् समाचारप्रेषणस्य आवश्यकता भवति तदा तन्त्रीद्वारा बहुदूरेऽपि शीघ्रातिशीघ्रम् समाचारः प्रेषयितुं शक्यते। एवं च दूरवर्तिनां जनानां मध्ये समाचारप्रापणद्वारा एष विभागः जनतायाः महतीं सेवां करोति।

---

१—जितने। २—हो जाय, आ जाय। ३—पहुँचाना। ४—तार द्वारा। ५—मनीआर्डर द्वारा। ६—रजिष्ट्री करना। ७—होती। ८—जानते। ९—जनाते।

एवमेव रूप्यप्रैषद्वारा रूप्यकप्रेषणेन अपि अयं विभागः लोकानां महदुपकारं करोति। अनेके जनाः दूरदूरदेशान् गत्वा विविधानि च कार्याणि कृत्वा द्रव्योपार्जनं कुर्वन्ति तथा तेन एव च द्रव्येण स्वपरिवारं पोषयन्ति। तेषां परिवारस्य जीवनं तेषाम् एव द्रव्यस्य उपरि निर्भरं भवति। "कदा रूप्यकाणि आगमिष्यन्ति, कदा रूप्यकाणि आगमिष्यन्ति" इति ते दिवानिशं रूप्यकाणि प्रतीक्षमाणाः तिष्ठन्ति। यदा च बहिःस्था जनाः मासिकवेतनं लब्ध्वा[१०] तेभ्यः रूप्यप्रैषद्वारा द्रव्यं प्रेषयन्ति तदा तेषां जीवनस्य अवलम्बनं भवति। यदि डाकद्वारा रूप्यप्रेषणस्य ईदृशी समुचिता व्यवस्था न अभविष्यत् तर्हि अनेके कुटुम्बिनः द्रव्यं विना महतीं दुर्दशां प्राप्स्यन्।

एवमेव निबन्धनेन[११], सुरक्षापूर्वकं विविधवस्तूनां यत्र तत्र प्रेषणेन तथा धनिकानां द्रव्यसंरक्षणेन च लोकस्य महान् लाभः भवति। एवं च डाकविभागद्वारा क्रियमाणैः[१२] सर्वैः अपि कार्यैः जनतायाः महती सेवा विधीयते इत्यत्र नास्ति कश्चित् सन्देहः।

पूर्वं दूरे दूरे पत्रालयाः[१३] आसन्[१४]। एतेन लोकानां कृते अवश्यमेव काचित् असुविधा आसीत्। परन्तु सम्प्रति पत्रालयानां संख्या पूर्वापेक्षया अतीव वृद्धिं गता वर्तते। एवमेव तन्त्रीगृहाणाम्[१५] अपि संख्या सम्प्रति पूर्वापेक्षया अधिका जाता वर्तते। पूर्वं पत्रवाहकाः[१६] पदातयः[१७] एव दूरे दूरे पत्राणि प्रापयन्ति स्म[१८] परं सम्प्रति यानद्वारा अपि पत्रप्रापणस्य व्यवस्था विधीयमाना[१९] वर्तते। बहुषु प्रधानेषु नगरेषु वायुयान-

---

१०–पाकर। ११–रजिष्ट्री के द्वारा। १२–किये जा रहे। १३–डाकखाना। १४–थे। १५–तार घर। १६–डाकिया। १७–पैदल। १८–पहुँचाते थे। १९–की जा रही।

द्वारा अपि पत्रप्रेषणस्य व्यवस्था विहिता वर्तते। एवं प्रकारेण अस्य विभागस्य सर्वेषु क्षेत्रेषु दिने दिने सौविध्यं वर्धमानं विलोक्यते।

इयं देशस्य अन्तर्वर्तिनी व्यवस्था वर्तते। एवमेव विदेशेषु अपि जलयानद्वारा वायुयानद्वारा च पत्रादीनां प्रेषणस्य समीचीना व्यवस्था वर्तते। डाकविभागस्य कर्मचारिणः यदि स्वस्वकार्येषु कामपि त्रुटिं दुर्व्यवस्थां दुर्व्यवहारं च न कुर्युः[२०] तर्हि अस्मात् विभागात् महान् लाभः सम्पद्येत[२१]।

---

## ३५—पुस्तकालयः

यत्र सर्वेषां जनानां सामान्यरूपेण पठनाय पुस्तकानां संग्रहो विधीयते स पुस्तकालयः कथ्यते।

पुस्तकालयेषु प्रायेण बहूनां जनानां सहायतया विविध-विषयकाणां पुस्तकानां संग्रहो विधीयते। तस्य सञ्चालनाय एका समितिः भवति। एकः पुस्तकालयाध्यक्षो निर्वाच्यते यः प्रतिदिनं सुनिश्चिते समये आगत्य पुस्तकालयस्य उद्घाटनं करोति तथा पुस्तकानां आदानप्रदानयोः अपि व्यवस्थां करोति। पुस्तकालये बहूनि समाचारपत्राणि अपि आगच्छन्ति। नियमिते समये पाठकाः आगत्य यथारुचि पुस्तकानि पत्र-पत्रिकादीनि च आदाय पठन्ति, पठित्वा च गमनसमये परावर्तयन्ति[१]। ये जनाः पुस्त-कालयाय नियमितरूपेण मासिकं शुल्कं ददते ते स्वगृहेऽपि पुस्तकानि नीत्वा पठितुं शक्नुवन्ति।

---

२०—करें। २१—हो।

१—लौटाते हैं।

पुस्तकालयानां स्थापनेन प्रचारेण च समाजस्य महान् लाभो वर्तते। शिक्षाप्रचारस्य साधनेषु पुस्तकालयानां महत्त्वपूर्णं स्थानं वर्तते। येषां जनानां सविधे पुस्तकानां क्रयणाय धनं न भवति तेऽपि पुस्तकालयान् गत्वा इच्छानुसारं पुस्तकानि पठन्ति। ये च निर्धनाः छात्राः स्वद्रव्येण पाठ्य-पुस्तकानां क्रयणे असमर्थाः भवन्ति तेऽपि पुस्तकालयेभ्यः पुस्तकानि गृहीत्वा स्वकार्यं सञ्चालयन्ति। यस्मिन् स्थाने पुस्तकालयो भवति तत्र ये अनिच्छया गच्छन्ति तेऽपि किञ्चित् पठन्त्येव। अथ च ये विशिष्टा विद्वांसः कस्यापि विषयस्य विशेषरूपेण अध्ययनं अनुसन्धानं वा कुर्वन्ति तेषां निर्वाहस्तु पुस्तकालयेभ्यः विना असम्भव एव वर्तते। एवं च शिक्षाप्रचारे पुस्तकालयानां महती उपयोगिता वर्तते। पुस्तकालयेषु समाचारपत्रद्वारा यत् देश-विदेशयोः समाचाराणां ज्ञानं भवति सोऽपि एकः महान् लाभः अस्ति।

प्रसन्नतायाः अयं विषयो वर्तते यत् सम्प्रति पुस्तकालयानां संख्या दिने दिने वर्धमाना विलोक्यते। राजकीयशिक्षा-विभागः, सामाजिकाः पुरुषाः, साधारणजनाश्च सर्वेऽपि पुस्तकालयानां सम्वर्द्धनार्थं प्रयतमानाः सन्ति। पुस्तकालयानां सङ्घटनाय च काश्चित् समितयोऽपि तत्तत्प्रदेशेषु राज्यद्वारा सञ्चालिताः सन्ति। इमां प्रगतिं दृष्ट्वा विश्वासो भवति यत् अल्पेनैव कालेन ग्रामे-ग्रामे पुस्तकालयाः स्थापिताः भविष्यन्ति। क्वचित्-क्वचित् पुस्तकालयेषु अनेकाः दुर्व्यवस्था अपि दृष्टिगोचराः भवन्ति। यथा— क्वचित् उपयोगिनां पुस्तकानां न्यूनता भवति, क्वचित् आवश्यकानि उपकरणानि न भवन्ति, क्वचित् उद्घाटनस्य पिधानस्य च समयो निश्चितो न भवति, क्वचित् पुस्तकानां आदान-प्रदानयोः काचित् सुव्यवस्था न भवति। इमाः सर्वाः दुर्व्यवस्था यदि दूरीकृताः स्युः तदा पुस्तकालयेभ्यः समाजस्य सुमहान् उपकारः सम्पद्येत।

---

## ३६—शिक्षा

यया[1] मनुष्यस्य शारीरिकशक्तीनाम् आध्यात्मिकशक्तीनां च सम्यक् प्रकारेण विकाशः भवति सा शिक्षा कथ्यते। मनुष्यः केवलं जन्मना एव मनुष्यो न भवति प्रत्युत[2] यदा स शिक्षां प्राप्नोति तदैव पूर्णरूपेण[3] मनुष्यो भवति। अतः मनुष्याणां कृते शिक्षा सर्वाधिकम् आवश्यकं महत्त्वपूर्णं च वस्तु वर्तते।

शिक्षायाः अगणनीयाः लाभाः सन्ति। यावत् मनुष्यः समुचितां शिक्षां न लभते तावत् स किमपि कार्यं समीचीनरूपेण कर्तुं न शक्नोति। यथा खनि[4]-निर्गतं रत्नं संस्कारं विना धारणोपयोगि न भवति तथैव मनुष्यः अपि शिक्षां विना समाजे व्यवहारोपयोगी न भवति।

यदा मनुष्यः बाल्यकालाद् एव समुचितां शिक्षां प्राप्नोति तदा एव स सम्यक् प्रकारेण कर्तव्यम् अकर्तव्यम् वा ज्ञातुं शक्नोति। स एव उचितम् अनुचितमपि वा वेदितुं[5] प्रभवति[6]। शिक्षासम्पन्नः पुरुषः यदेव कार्यं कुरुते तदेव समीचीनतया[7] करोति। शिक्षितानां पुरुषाणां भोजनं पानम्, हासः परिहासः, क्रीडा कौतुकम्, वादः विवादः, आलापः संलाप, उत्थानम्[8] उपवेशनम्[9], कासः, श्वास[10]श्चेति सर्वमपि लघु महद् वा कार्यं शोभनं सभ्यतापूर्णं च भवति। इतो विपरीतम् अशिक्षिताः

---

१—जिससे। २—बल्कि। ३—अच्छी तरह से। ४—खान। ५-६—जान सकता है। ७—अच्छी तरह से। ८—उठना। ९—बैठना। १०—खाँसी।

जनाः यदेव कार्यं कुर्वन्ति तदेव असभ्यतापूर्णम् अशोभनम् उद्वेगजनकं च भवति । अतो मानवजीवने शिक्षायाः महत्त्वं सर्वाधिकं मन्यते ।

हर्षस्य अयं विषयो वर्तते यत् सम्प्रति स्वतन्त्रे भारते शिक्षालयानां संख्या प्रतिवर्षं वर्द्धमाना विलोक्यते ।

इयं शिक्षायाः अभिवृद्धिः देशस्य कृते शुभलक्षणं वर्तते । परन्तु सहैव[११] इदं दृष्ट्वा महद् दुःखमपि भवति यत् साम्प्रतं शिक्षालयेषु ये शिक्षां गृह्णन्ति तेषु संयमस्य, सदाचारस्य, अनुशासनपालनस्य च महान् अभावो दृश्यते। ते केवलं परीक्षादानं, प्रमाणपत्रस्य प्राप्तिं, ततश्च येन केनापि प्रकारेण अर्थोपार्जनकरणमेव स्वजीवनस्य अन्तिमं लक्ष्यं मन्यते । वर्तमानायाः शिक्षापद्धतेः अयमेकः महान् दोषः अस्ति । अतः शिक्षाप्रचारेण सह अस्य महतः दोषस्य दूरीकरणेऽपि ध्यानदानं परमावश्यकं वर्तते । तदैव शिक्षा वास्तविकी शिक्षा भविष्यति, शिक्षिताश्च वास्तविकरूपेण शिक्षिता मँस्यन्ते[१२] ।

———

## ३७—विद्या

येन वस्तुना मनुष्यस्य अज्ञानं नश्यति तथा ज्ञानं जायते तत् विद्या इति कथ्यते ।

अस्मिन् संसारे बहूनि उपयोगीनि वस्तूनि सन्ति परं तेषु विद्या एव सर्वश्रेष्ठं उपयोगि वस्तु अस्ति। अखिलेऽपि ब्रह्माण्डे ईदृशं किमपि नास्ति यत् विद्यायाः समानतां कुर्यात्[१] ।

संसारे धनस्य महती प्रतिष्ठा वर्तते। धनं विना मनुष्यस्य

---

११—साथ ही । १२—माने जायेंगे ।

१—करे ।

निर्वाहः सर्वथा असम्भवः अस्ति। परन्तु धनम् अपि विद्यायाः समानतां कर्तुं न शक्नोति। यतः धनं खलु चौराः चोरयन्ति, लुण्ठकाः[२] लुण्ठन्ति, अग्निः ज्वालयति, जलं वाहयति, दायादाः[३] विभजन्ते[४], शासकाः हरन्ति, तथा पशवः पक्षिणः कीटकाः च भक्षयन्ति। बहूनि धनानि भूकम्पादिना विनश्यन्ति स्वयं वा कालवशात् जीर्णशीर्णानि भूत्वा अन्ते विनाशं प्राप्नुवन्ति। एवं प्रकारेण धनिकानां धनसम्बन्धे पदे पदे भीतयः[५] सन्ति। परन्तु विद्याधने एतादृशं किमपि भयं नास्ति। अन्यानि धनानि व्यये[६] क्रियमाणे क्रमशः क्षीणानि भवन्ति परं विद्यायाः भाण्डारं यथा यथा व्ययीक्रियते[७] तथा तथा प्रतिदिनं परिवर्द्धते एव।

विद्यासमानं भूषणम् अपि संसारे अन्यत् नास्ति। सामान्यतः लोके सुवर्णमयानि[८] रजतमयानि[९] च भूषणानि शोभायाः साधनानि मन्यन्ते। अतएव नराः नार्यश्च किरीटेन[१०] कुण्डलेन, कङ्कणेन केयूरेण[११], नूपुरेण[१२] मञ्जीरेण[१३], तिलकेन चन्दनेन तथा अन्यैश्च आभूषणैः निज-निजशरीराणि भूषयन्ति। बहवः जनाः शोभायै कण्ठे हारं धारयन्ति, मुखे ताम्बूलं चर्वन्ति, नयनयोः कज्जलं लगयन्ति, मणिबन्धे[१४] घटीं[१५] बध्नन्ति, विविधाः केशरचनाः कुर्वन्ति तथा सुन्दर-सुन्दराणि वस्त्राणि च परिदधते[१६]। परन्तु मनुष्यस्य शोभा यथा विद्यया भवति तथा अन्यसाधनैः न भवति। विद्याभूषणस्य अग्रे अन्यानि भूषणानि निष्प्रभाणि भवन्ति। अतएव महाकविना भर्तृहरिणा लिखितम्—

---

२—लुटेरे। ३—पट्टीदार। ४—बाँट लेते हैं। ५—भय। ६—खर्च। ७—खर्च किया जाता है। ८—सोने के। ९—चाँदी के। १०—मुकुट। ११—बिजायठ। १२—पायजेब। १३—नूपुर का ही भेद। १४—कलाई पर। १५—घड़ी। १६—पहनते हैं।

**विद्या परं भूषणम्।**

विद्यायाः गुणाः लाभाश्च अगणनीयाः सन्ति। विद्यया एव मनुष्यः विद्वान् भवति, हिताहितं जानीते, उचितानुचितं विचारयति, कर्तव्याकर्तव्ययोश्च निश्चयं करोति। विनयः, विवेकः, शीलं, सहृदयता, सदाचारः, शिष्टता चेति गुणगणाः अपि विद्याप्रभावेण एव मनुष्ये समागच्छन्ति। अनेन कारणेन विद्यावान् जनः यत्रैव गच्छति तत्रैव आदरं लभते तथा पूजितः प्रतिष्ठितश्च भवति।

अन्यच्च, अद्य जगतीतले यत्किञ्चित् वय शिवं, सुन्दरं तथा विस्मयकरं विविधं वस्तुजातं पश्यामः तत् सर्वं विद्याया एव फलं वर्तते। विद्याबलेन एव मनुष्यैः नानाविधाः आविष्काराः आविष्कृताः सन्ति।

यदि जगतीतले विद्यायाः प्रकाशो न स्यात् तदा समग्रमपि जगत् अज्ञानान्धकारे निमग्नं जायेत तथा मानवजीवनं पशुजीवन-समानं सम्पद्येत। सफलतायै तथा सम्पूर्णजगति सुखशान्तिसमृद्धये च विद्यायाः प्रसारस्य महती आवश्यकता वर्तते।

---

## ३८—अस्माकं राष्ट्रभाषा

या भाषा राष्ट्रे सर्वाधिकं प्रचलिता भवति तथा यस्यां भाषायां राष्ट्रस्य सर्वाणि राजकार्याणि भवन्ति सा राष्ट्रभाषा कथ्यते। एकतायै तथा व्यवहारे सुविधायै एकस्याः राष्ट्रभाषाया भवनं[1] परमावश्यकं भवति।

१—होना।

परतन्त्रतायाः समये अस्माकं देशस्य सर्वाणि राजकार्याणि अंग्रेजीभाषायां भवन्ति स्म। अंग्रेजीभाषा एव तदा राजमान्या भाषा आसीत्। शिक्षायां, समाजे, शासने च तस्याः एव सर्वत्र प्रधानता आसीत्। परन्तु यस्मात् कालात् अस्माकं देशः स्वतन्त्रतां प्राप्तवान् अस्ति तस्मात् समयात् अंग्रेजीभाषायाः स्थाने हिन्दी एव राष्ट्रभाषा घोषिता अस्ति। अतः सम्प्रति अस्माकं देशस्य राष्ट्रभाषा हिन्दी एव वर्तते।

अस्माकं देशे अनेकाः प्रादेशिक्यः भाषाः प्रचलन्ति। उत्तर-भारते बँगला, मराठी, गुजराती, उड़िया, आसामी, मैथिली, पंजाबी प्रभृतयः अनेकाः भाषाः प्रचलिताः सन्ति। दक्षिणभारते च तमिल, तेलगू, कन्नड, मलयालम प्रभृतयः अनेकाः भाषाः प्रचलिताः सन्ति। आसु सर्वासु अपि भाषासु हिन्दी सर्वाधिकं प्रचलिता भाषा वर्तते। देशस्य अधिकाः जनाः हिन्दीभाषाम् एव वदन्ति तथा अवगच्छन्ति[२]। येषां मातृभाषा हिन्दी नास्ति ते अपि हिन्दीभाषायाः माध्यमेन साधारणतया स्व-कार्य-सञ्चालने समर्था भवन्ति। अतएव हिन्दीभाषा राष्ट्रभाषापदे संस्थापिता वर्तते।

अस्माकं देशे एका अन्या भाषा संस्कृतम् अपि अस्ति। इयमेव भाषा अस्य देशस्य प्राचीना राष्ट्रभाषा अस्ति। हिन्दीप्रभृतयः सर्वा अपि भाषाः अस्या एव भाषायाः सन्ततयः[३] सन्ति। संस्कृतभाषा अद्यापि इमाः स्वसन्ततीः समानभावेन पालयति पोषयति च। अत एव संस्कृतभाषां प्रति सर्वेषां भारतीयानां हृदये महान् आदर-भावः अस्ति। अनेन कारणेन बहूनां संस्कृतानुरागिणां विचारः आसीत् यत् संस्कृत-

---

२—समझते हैं। ३—सन्तान।

भाषा एव राष्ट्रभाषापदे समासीना भवेत्। परन्तु हिन्दीभाषा सम्प्रति लोकभाषा अस्ति। संस्कृतापेक्षया हिन्दीभाषायाः प्रचारः सुगमतया भवितुमर्हति। अतः हिन्दीभाषा एव बहूनां सम्मत्या राष्ट्रभाषा-सिंहासने अभिषिक्ता वर्तते। संस्कृतभाषा च अस्याः आकर[४]भाषात्वेन सम्मानिता वर्तते। अर्थात् हिन्दीभाषायां यदि नूतनशब्दानां निर्माणस्य आवश्यकता भविष्यति तर्हि ते शब्दाः संस्कृतभाषायाः एव साहाय्येन निर्मास्यन्ते[५]। इदमपि स्वीकृतं वर्तते यत् हिन्दीभाषायाः राष्ट्रभाषाभवनेन प्रादेशिकभाषाणां समुन्नतौ काचन बाधा न भविष्यति। एवं प्रकारेण स्वमातरं संस्कृतभाषां सम्मानयन्ती तथा स्वभगिनीभिः[६] प्रादेशिकभाषाभिश्च स्नेहं संवर्द्धयन्ती हिन्दी राष्ट्रभाषापदे सुशोभिता वर्तते।

यद्यपि राष्ट्रभाषा हिन्दी घोषिता वर्तते तथापि अस्याः समुन्नतौ व्यवहारे च प्रशासनस्य[७] तथा जनतायाश्च यादृशी तत्परता अपेक्ष्यते तादृशी नास्ति। विद्वांसोऽपि अस्मात् दोषात् मुक्ताः न सन्ति। बहूनां विदुषां हृदये अद्यापि अंग्रेजीभाषायाः मोहः विराजमानो वर्तते। दक्षिणभारतीयाः केचन शिक्षाशास्त्रिणः प्रत्यक्षरूपेण हिन्दीभाषायाः विरोधं कुर्वाणाः सन्ति। अन्ये बहवः उदासीनाः सन्ति। परन्तु अस्माकं कृते इदं शोभनीयं नास्ति। प्रशासनेन, विद्वत्समाजेन, नागरिकैश्च तथा प्रयतनीयं यथा अल्पेन एव कालेन हिन्दीभाषा सर्वाङ्गसम्पन्ना भूत्वा वास्तविकरूपेण राष्ट्रभाषापदं विभूषितं कुर्यात्।

---

४—खजाना। ५—बनाये जायेंगे। ६—अपनी बहन। ७—सरकार का।

## ३६—पुस्तकानां रक्षा

ज्ञानस्य यानि अनेकानि साधनानि सन्ति तेषु पुस्तकं एकं प्रधानं साधनं वर्तते। विद्वांसः स्वेन अनुभवेन यत् ज्ञानं प्राप्नुवन्ति तत् पुस्तकेषु एव सुरक्षितं तिष्ठति। सृष्टिकालात् आरभ्य अद्यावधि संसारे यावन्तः ज्ञानस्य विषयाः सन्ति ते सर्वे पुस्तकेषु एव सुरक्षिताः सन्ति।

यदि संसारे लेखनस्य प्रणाली आविष्कृता न अभविष्यत्[१], यदि लेखकाः पुस्तकानि न अलेखिष्यन्[२], यदि लिखितानि पुस्तकानि सुरक्षितानि न अरक्षिष्यन्त[३] तर्हि ज्ञानस्य प्राप्तिः सर्वथा दुर्लभा अभविष्यत्।

यदि रामायणस्य पुस्तकं न अभविष्यत् तर्हि कथं रामकथाया अद्य ज्ञानम् अभविष्यत्? यदि वेदपुस्तकानि सुलभानि न अभविष्यन् तर्हि केन प्रकारेण ऋषीणां ज्ञान-विज्ञान-वैभवं लब्धम् अभविष्यत्? अत एव ज्ञानार्जनविषये पुस्तकानां महती उपयोगिता वर्त्तते।

प्राचीनकाले जनानां स्मृतिशक्तिः धारणशक्तिश्च प्रबला भवति स्म। अतः तस्मिन् काले श्रवणपरम्परया अपि ज्ञानं सुलभं भवति स्म। परन्तु अधुना उपर्युक्ते उभे[४] अपि शक्ती शनैः शनैः ह्रासं गते स्तः। अतः साम्प्रतं तु पुस्तकानि विशेषरूपेण हितकराणि सन्ति।

अत एव पुस्तकानां रक्षायाः विषये पाठकानां ध्यानदानं

---

१—होती। २—लिखते। ३—रखी जाती। ४—दोनों।

परमावश्यकं वर्तते। बहवः जनाः पुस्तकानि पठन्ति परन्तु ते तानि सम्यक् न रक्षन्ति। केचन पुस्तकानि मोटयन्ति[५]। केचन पुस्तकानि त्रोटयन्ति[६]। केचन तानि भूमौ पोथयन्ति[७]। केचन पुस्तकेषु एव शिरो निधाय[८] शेरते[९]। केचन पुस्तकेषु एव खाद्य-वस्तूनि खादन्ति। केचन पुस्तकेष् एव लवणं मरिचं च स्थापयन्ति[१०]। केचन पुस्तकेषु अनावश्यकं लिखन्ति। केचन च सुन्दरादपि सुन्दरं पुस्तकम् एकेन एव दिनेन मलिनयन्ति। न केवलम् एतावदेव। अनेके जनाः पुस्तकेभ्यः पत्राणि तथा चित्राणि च विदारयन्ति[११]।

इमे सर्वे पुस्तकैः सह क्रियमाणाः[१२] दुर्व्यवहाराः सन्ति। न च इमे सर्वे व्यवहाराः स्वपुस्तकैः सह एव विधीयन्ते प्रत्युत परेषां पुस्तकैः सह अपि। परन्तु इदं सर्वथा अनुचितं वर्तते।

यथा पुस्तकेभ्यः अस्माकं महान् लाभः अस्ति तथैव तेषां सुरक्षायाम् अपि महती सावधानता वर्तनीया।

---

## ४०—व्यायामः

शारीरिकशक्तिवृद्धये यः विविधः श्रमः[१] क्रियते स व्यायाम इति निगद्यते।

---

५—मोड़ते हैं। ६—तोड़ते हैं। ७—पटक देते हैं। ८—रखकर। ९—सोते हैं। १०—रखते हैं। ११—फाड़ देते हैं। १२—किये जाने वाले।

१—मिहनत।

अस्माकं जीवने शारीरिकशक्तेः अपि महती आवश्यकता भवति। यथा जीवनस्य सफलतायै विद्याबलं वा, धनबलं वा, जनबलं वा आवश्यकं भवति तथैव शारीरिकं बलमपि आवश्यकं भवति। यस्य शरीरे बलं नास्ति, यस्य अङ्गप्रत्यङ्गानि हृष्टपुष्टानि न भवन्ति स साधारणमपि कार्यं कर्तुं न शक्नोति। अतः मनुष्यस्य कृते शारीरिक-शक्तिसञ्चयः अपि एकं परमावश्यकं कार्यं भवति। अस्याः शारीरिकशक्तेः साधनेषु व्यायामः एकं प्रमुखं[२] साधनं वर्तते।

व्यायामस्य अनेके प्रकाराः सन्ति। यथा– नियमतः प्रतिदिनं धावनम्[३], सायं प्रातः नियमितं भ्रमणम्, दण्ड-मुद्गरादीनां[४] चालनम्, उत्थानम्, उपवेशनम्, प्राणायाम-करणम्, जले सन्तरणम्[५], विविधानाम् आसनानाम् अभ्यासः, सूर्य-नमस्कारः, खेलन-कूर्दनादिकञ्च। एतदतिरिक्तं[६] अन्येऽपि अनेके व्यायामस्य प्रकाराः व्यायामशालासु[७] प्रचलिताः सन्ति।

एतेषां नियमपूर्वकम् अनुष्ठानेन अनेके लाभाः भवन्ति। शक्तिसञ्चयो भवति, अङ्ग-प्रत्यङ्गानि हृष्ट-पुष्टानि भवन्ति, शरीरं सुघटितं[८] जायते, श्रमशक्तिः वर्द्धते, स्वास्थ्यं शोभनं तिष्ठति, आलस्यं नश्यति, शिथिलता अपयाति[९], स्फूर्तिः सञ्जायते, रोगः अपि झटिति तस्योपरि आक्रमणं न करोति, जरा[१०] शीघ्रतया शरीरं न अभिभवति[११] तथा पाचनक्रिया अपि प्रायेण दूषिता[१२] न भवति। इमे बहुविधाः लाभाः सन्ति व्यायामकरणस्य।

व्यायामे न कश्चिद् व्ययो[१३] वर्तते न च बाह्यसाधनानाम्

२–प्रधान। ३–दौड़ना। ४–मुंगड़ा। ५–तैरना। ६–इसके अलावा। ७–अखाड़ों में। ८–गठीला। ९–दूर होती है। १०–बुढ़ापा। ११–दबाती है। १२–खराब। १३–खर्च।

एव आवश्यकता भवति। यदि शरीरं नीरोगं स्यात् तदा सर्वे जनाः सर्वत्र यत् किञ्चित् व्यायामं कर्तुं शक्नुवन्ति एव। अतः सर्वैरपि जनैः यथासम्भवं व्यायामद्वारा शारीरिकशक्ति-संवर्द्धनाय प्रयासः[१४] कर्तव्यः।

---

## ४१—स्वास्थ्यम्

शरीरस्य चित्तस्य च निर्विकारा स्थितिः एव स्वास्थ्यम् इति कथ्यते। यदा मनुष्यस्य शरीरे मनसि वा कश्चिद् विकारः न भवति तदा मनुष्यः स्वस्थः इति उच्यते।

मनुष्यस्य जीवने बहूनि वस्तूनि आवश्यकानि भवन्ति। शिक्षा आवश्यकी भवति। धनम् आवश्यकं भवति। गृहम् आवश्यकं भवति तथा परिवारः आवश्यकः भवति। परन्तु एषु सर्वेषु अपि वस्तुषु सर्वापेक्षया आवश्यकं वस्तु स्वास्थ्यं भवति। मनुष्यस्य इदं सर्वोत्तमं धनं वर्तते। यावत् मनुष्यस्य स्वास्थ्यं शोभनं न भवति तावत् स किमपि अन्यत् कार्यं कर्तुं समर्थः न भवति। विद्याध्ययनं वा, धनोपार्जनं वा, धर्मानुष्ठानं वा, लोकसेवा वा, परदेशगमनं वा सर्वमपि कार्यं स्वस्थः एव मनुष्यः कर्तुं शक्नोति। अतएव महाकविना कालिदासेन कुमारसम्भवे कथितम्—

**शरीरमाद्यं खलु धर्मसाधनम्।**

ये मनुष्याः स्वस्थाः न भवन्ति ते स्वार्थं परार्थं वा किमपि कार्यं कर्तुं न पारयन्ति। तेषां कृते स्वकीयानि नित्यकर्माणि अपि

---

१४–प्रयत्न।

असाध्यानि भवन्ति। स्वास्थ्यहीनानां मनुष्याणां कृते[1] शरीरधारणम् अपि कष्टकरं भवति। अस्वस्थाः मनुष्याः गृहे सुखसाधनेषु विद्यमानेषु[2] अपि सुखोपभोगं कर्तुं न शक्नुवन्ति। तेषां कृते निखिलानि अपि सुखसाधनानि निरर्थकानि भवन्ति। अतः सुखोपभोगाय अपि स्वास्थ्यस्य महती आवश्यकता अस्ति।

अनेन कारणेन सर्वैः अपि सुखाभिलाषिभिः स्त्रीपुरुषैः स्वास्थ्यस्य उपरि पूर्णरूपेण ध्यानं दातव्यम्। स्वास्थ्यरक्षायाः ये ये नियमाः स्वास्थ्यपुस्तकेषु लिखिताः सन्ति तेषां सम्यक् प्रकारेण पालनं कर्तव्यम्। आहारे विहारे, शयने जागरणे च कालातिक्रमः न कर्तव्यः। स्वास्थ्यविरोधिनां वस्तूनां भोजने पाने वा उपभोगो न विधातव्यः[3]। शरीरे, मनसि, मस्तिष्के[4] च अत्यधिको भारो न देयः[5]। प्रतिदिवसं यथाशक्ति व्यायामः कर्तव्यः। स्थानस्य, शरीरस्य, वस्त्रादीनां च स्वच्छतायां ध्यानं दातव्यम्। एतेषां नियमानां पालनेन स्वास्थ्यं समीचीनं[6] तिष्ठति।

---

## ४२—समयस्य सदुपयोगः

समयस्य समुचिते रूपे उपयोगः एव समयस्य सदुपयोगः कथ्यते। समयस्य सदुपयोगः मानवसमाजस्य हितसाधकेषु साधनेषु सर्वप्रमुखं साधनं वर्तते।

संसारे बहूनि वस्तूनि बहुमूल्यानि सन्ति परं तेषु सर्वापेक्षया

---

१—लिए। २—रहने पर, रहते हुए। ३—करना चाहिए। ४—दिमाग पर। ५—देना चाहिए। ६—अच्छा।

बहुमूल्यं वस्तु समयः एव वर्त्तते। यतः अन्यानि वस्तूनि विनष्टानि अपि पुनः लब्धुं शक्यन्ते परन्तु व्यतीतः समयः केनापि उपायेन पुनः लब्धुं न शक्यते। विद्या विनष्टा पुनः अभ्यासेन लब्धुं शक्यते, धनं विनष्टं पुनः उपार्जनेन लब्धुं शक्नोति, यशो विनष्टं पुनः सत्कर्मणा उपार्जयितुं शक्यते परं विनष्टः समयः सहस्रैरपि प्रयत्नैः पुनः दुर्लभः एव।

अतएव समयः सर्वाधिकं बहुमूल्यं वस्तु मन्यते[१]। तस्मात् सर्वैः मनुष्यैः तथा प्रयत्नः कर्तव्यः यथा एकमपि क्षणं निरर्थकं न स्यात्। विश्रामसमयं परित्यज्य दिने वा रात्रौ वा सर्वदा स्वकर्त्तव्यपालनेन समयस्य सदुपयोगः कर्तव्यः। समयः स्वल्पः अस्ति, कर्त्तव्यानि बहूनि सन्ति। अस्यामपि अवस्थायां ये जनाः समयस्य सदुपयोगं न कुर्वन्ति ते बुद्धिमन्तः अपि मूर्खा एव मन्तव्याः[२]। ये मनुष्याः एकैकस्य क्षणस्य बहुमूल्यं मन्यन्ते[३], एकमपि क्षणं वृथा न यापयन्ति[४], सर्वदैव कार्यकरणे निरताः तिष्ठन्ति ते एव बुद्धिमन्तः सन्ति। एतादृशाः एव जनाः आत्मनः समाजस्य देशस्य च समुन्नतिं कुर्वन्ति गौरवं च वर्द्धयन्ति[५]।

एभिः कारणैः समयस्य सदुपयोगकरणं कियत् परमावश्यकं कार्यं वर्त्तते इति विषये लेशमात्रस्यापि सन्देहस्य अवसरः नास्ति। तथापि दुःखस्य इयं वार्ता वर्त्तते यत् अस्माकं देशे बहवः जनाः समयस्य महान्तं दुरुपयोगं कुर्वन्ति। भूयांसः[६] जनाः वृथाशयनेन, वृथाभ्रमणेन, व्यर्थकार्यकरणेन, निरर्थकवार्तालापेन, इतस्ततो वृथा उपवेशनेन[७], वृथा कलहेन, व्यर्थ-

---

१—माना जाता है। २—माने जाने चाहिए। ३—मानते हैं। ४—बिताते हैं। ५—बढ़ाते हैं। ६—बहुत। ७—बैठने से।

विवादेन च स्वजीवनस्य अधिकतरं भागं वृथा[८] यापयन्ति। न ते स्वार्थमेव साधयन्ति न परार्थमेव। एतादृशाः जनाः स्वकीयां दिनचर्याम् अपि यथासमयं न सम्पादयन्ति का पुनः वार्ता अन्यकार्याणाम्। ईदृशाः जनाः न केवलं स्वस्य एव हानिं कुर्वन्ति प्रत्युत सम्पूर्णस्यापि समाजस्य देशस्य च हानिं कुर्वन्ति।

अस्माकं भारतीयानां कृते अयं राष्ट्रनिर्माणस्य कालः वर्तते। अस्माकं स्कन्धेषु राष्ट्रनिर्माणस्य महान् भारः वर्तते। अस्मिन् समये तु विशेषरूपेण अस्माभिः समयस्य सदुपयोगे ध्यानं दातव्यं येन शीघ्रतया राष्ट्रस्य समुन्नतिः स्यात्। अस्मिन् विषये छात्रैः विशेषतया ध्यानं देयम्। यतः[९] ते एव भारतस्य भाविनः कर्णधाराः तथा भाग्यविधातारः सन्ति।

---

## ४३—व्यवहार-ज्ञानम्

अन्येन जनेन सह केन प्रकारेण व्यवहारः कर्तव्यः एतस्य ज्ञानं व्यवहार-ज्ञानं कथ्यते।

मनुष्यः एकः सामाजिकः प्राणी अस्ति। स एकाकी[१] वस्तुं न शक्नोति। स समाजे जन्म गृह्णाति, समाजे जीवति, समाजे निवसति तथा समाजे एव मृत्युमपि प्राप्नोति। अतएव जन्मना सहैव[२] तस्य अनेकैः पुरुषैः सह सम्बन्धः भवति।

---

८—बेकार। ९—क्योंकि।

१—अकेला। २—साथ ही।

अन्यच्च, मनुष्याणां कृते[३] बहूनि कर्तव्यानि अपि आवश्यकानि भवन्ति। तेषु कानिचित् वैयक्तिकानि[४], कानिचित् पारिवारिकाणि, कानिचन सामाजिकानि, कानिचित् राष्ट्रीयाणि तथा कानिचित् अन्यविधानि अपि भवन्ति। अनेन कारणेन अपि मनुष्यस्य अनेकैः मनुष्यैः सह सम्बन्धस्थापनस्य, अनेकैः मनुष्यैः सह निवासस्य, अनेकैः मनुष्यैः सह वार्तालापस्य तथा अनेकैः मनुष्यैः सह कार्यकरणस्य अनिवार्या[५] आवश्यकता भवति। अस्यां परिस्थितौ केन पुरुषेण सह कुत्र कीदृशः व्यवहारः कर्तव्यः इत्यस्य समुचितं ज्ञानं सर्वेषां मनुष्याणां कृते परमावश्यकं भवति। व्यवहारज्ञानम् एका जीवनोपयोगिनी महती कला अस्ति। अस्यां कलायां ये जनाः कुशलाः भवन्ति त एव समाजे बुद्धिमन्तः गण्यन्ते[६], समाजस्य नेतृत्वं कुर्वन्ति, सर्वत्र आदरं लभन्ते तथा सर्वेषु कार्येषु सफलतां प्राप्नुवन्ति। इतो विपरीतं ये जनाः व्यवहारज्ञानेन शून्याः भवन्ति ते सकलशास्त्रनिष्णाता अपि समाजे मूर्खा मन्यन्ते, सर्वत्र अनादरं लभन्ते तथा जीवने सर्वेषु अपि कार्येषु असफला एव भवन्ति। अतएव समाजे सम्मानाय कार्येषु सफलताप्राप्तये च सर्वैरपि जनैः व्यावहारिकज्ञानस्य अर्जनाय तदनुकूलम् आचरणाय च प्रयत्नः कर्तव्यः।

व्यवहारस्य क्षेत्रम् अतीव विस्तृतं वर्तते। अतएव तत्र सफलतायै ज्ञानमपि विस्तृतमेव अपेक्ष्यते। तथापि यत् यत् ज्ञानं व्यवहारक्षेत्रे नितान्तम् आवश्यकं भवति तस्य तस्य ज्ञानाय अवश्यं प्रयत्नः कर्तव्यः।

---

३–लिए। ४–व्यक्तिगत, निजो। ५–नहीं रोकी जाने लायक। ६–गिने जाते हैं।

## ४४—स्वावलम्बनम्

अन्येषाम् अवलम्बनं विहाय[1] स्वशक्त्या निजकार्यसम्पादनं स्वावलम्बनं कथ्यते। एतस्य एव द्वितीयः पर्यायवाची शब्दः आत्मनिर्भरता अस्ति।

आत्मनिर्भरता स्वावलम्बनं वा मनुष्यस्य एकः महान् गुणः अस्ति। स्वावलम्बनं मनुष्यस्य शारीरिकीणां मानसिकीनां च शक्तीनां विकासस्य सर्वोत्तमः उपायः अस्ति। स्वावलम्बिनां पुरुषाणां शरीरे स्फूर्तिः आयाति, चिन्तनशक्तिः वर्द्धते, बुद्धेः विकासः भवति, नव-नवाः अनुभवाः जायन्ते तथा आत्मगौरवस्य च आनन्ददायिनी अनुभूतिः[2] भवति।

ये मनुष्याः स्वावलम्बिनः भवन्ति, आत्मनिर्भराः भवन्ति, पदे पदे अन्येषां मुखं न अवलोकयन्ति ते एव समाजे आदर्श-पुरुषाः मन्यन्ते। एतादृशा एव पुरुषाः साहसिकाः, सहिष्णवः, प्रत्युत्पन्नमतयः, प्रतिभासम्पन्नाः, कार्यकुशलाः, कर्तव्यपरायणाश्च भवन्ति। स्वावलम्बनस्य प्रभावेण निर्धनाः अपि धनवन्तः भवन्ति, निरक्षराः अपि महापण्डिताः जायन्ते, अप्रतिष्ठिताः अपि महतीं प्रतिष्ठां लभन्ते, दुःखिनः अपि महत् सुखं प्राप्नुवन्ति तथा अकिञ्चनाः अपि महान्ति कार्याणि सम्पादयन्ति। एतादृशानां स्वावलम्बिनां पुरुषरत्नानां न केवलं मनुष्यः प्रत्युत[3] ईश्वरोऽपि सहायतां करोति। ईदृशा एव जना जगति सुखं जीवन्ति, सर्वत्र समादरं लभन्ते, सर्वेषां च प्रीतिभाजनानि भवन्ति।

---

१—छोड़ कर। २—अनुभव। ३—बल्कि।

इमे सर्वे स्वावलम्बनस्य लाभाः सन्ति। ये मनुष्याः अनेन गुणेन वञ्चिताः भवन्ति ते उपर्युक्तैः लाभैः अपि वञ्चिताः एव तिष्ठन्ति। दुःखस्य अयं विषयो वर्तते यत् अस्माकं समाजे बहवः जनाः अनेन गुणेन रहिताः वर्तन्ते। ते एतस्य आवश्यकताम् अपि न अनुभवन्ति। ते स्वबुद्ध्या स्वशरीरेण च किमपि कार्यं कर्तुं न इच्छन्ति। ते सर्वदैव परावलम्बनं प्रतीक्षन्ते। अस्माकं देशे बहवः जनाः भाग्यवादिनः अपि सन्ति। ते भाग्यनिर्भराः भूत्वा पुरुषार्थं कर्तुं न समीहन्ते। परन्तु समाजस्य अयं महान् दोषः अस्ति। एतादृशाः परावलम्बिनः मनुष्याः न आत्मनः उन्नतिं कर्तुं पारयन्ति न वा समाजस्य। ईदृशाः पुरुषा यस्मिन् देशे निवसन्ति स देशः कदापि समुन्नतः भवितुं न शक्नोति। अद्यावधि स एव देशः, सा एव च जातिः संसारे समुन्नतिं कृतवती अस्ति यस्यां सर्वे अपि जनाः स्वावलम्बिनः परिश्रमशीलाश्च जाताः सन्ति।

अनेन कारणेन आत्मनः समाजस्य देशस्य च हितायं सर्वैः अपि मनुष्यैः पूर्णतया स्वावलम्बिभिः भवितव्यम्।

———

## ४५—अतिथिसत्कारः

स्वयं समागतानां समाहूतानां[1] वा मान्यजनानां समुचितः सत्कारः "अतिथिसत्कारः" आतिथ्यम् इति वा कथ्यते। सम्प्रति अतिथिसत्कारस्य कृते स्वागतशब्दस्य बाहुल्येन प्रचारः अस्ति।

---

१—बुलाये गये।

अन्येषां सत्कारकरणं[२] खलु मनुष्याणाम् एकः महान् सामाजिकः गुणः अस्ति। विनयस्य, विवेकस्य, सामाजिकतायाश्च इदं प्रधानं चिह्नं भवति। महत्त्वप्राप्तेश्च इदं प्रधानं सोपानमस्ति[३]। यः पुरुषः अन्येषां सत्कारं करोति स सर्वेषां प्रीतिभाजनं भवति। सर्वे जनाः तं प्रशंसन्ति, सर्वे सम्मानयन्ति, सर्वे स्नेहं कुर्वन्ति, सर्वे च तस्य कृतज्ञाः भवन्ति। यथा स अन्येषां सत्कारं करोति तथैव अन्येऽपि तस्य सत्कारं कुर्वन्ति।

धार्मिकदृष्ट्या अपि अतिथिसत्कारस्य महती महत्ता वर्तते। शास्त्रकारैः अतिथिसत्कारस्य पञ्चमहायज्ञेषु गणना कृता वर्तते। अस्माकं शास्त्रेषु गृहागतस्य[४] शत्रोः अपि सत्कारः कर्त्तव्यकोटौ निहितः[५] अस्ति। का पुनः वार्ता अन्यपुरुषाणां सत्कारस्य। अतएव उपनिषदि लिखितं वर्तते—"अतिथिदेवो भव" इति।

अस्य अतिथिसत्कारस्य अनेके विधयः सन्तिः। यथा— दूरादेव आयान्तं श्रेष्ठपुरुषं दृष्ट्वा आसनात् उत्थानम्[६], तस्य समीपे गमनम्, विनयपूर्वकं प्रणामः, प्रीतिपुरस्सरं भाषणम्, कुशलप्रश्नः, गृहे आनयनम्[७], समुचिते आसने उपवेशनम्[८], भोजनशयनादीनां सुव्यवस्था, व्यजनादिना[९] श्रमापनयनम्[१०], आवश्यकसेवायै पुनः पुनः पृच्छा[११], समीपे अवस्थानम्[१२], स्वकार्यक्रमाणां परित्यागः सङ्कोचो वा, मधुरा आलापाः, आगमनाय प्रसन्नतायाः सूचनम्, अधिकनिवासाय आग्रहः, गमनकाले किञ्चिद्दूरं यावत्[१३] अनुगमनम्[१४], पुनः दर्शनदानाय अनुरोधः, तथा सस्नेहं विसर्जनं[१५] च।

---

२—सत्कार करना। ३—सीढ़ी। ४—घर में आये हुए। ५—रखा गया। ६—उठना। ७—ले आना। ८—बैठाना। ९—पंखा आदि से। १०—थकावट दूर करना। ११—पूछना। १२—ठहरना। १३—तक। १४—पीछे-पीछे चलना। १५—बिदा कर देना।

अयं सत्कारविधिः दूरात् समागतानां परपुरुषाणां च वर्तते। परं मातापितृप्रभृतयः ये गुरुजनाः, ज्येष्ठकनिष्ठाः भ्रातरः, ग्रामवासिनो वा भद्रपुरुषाः सर्वदैव समीपे निवसन्ति तेषामपि यथोचितैः प्रणामाशीर्वादैः, विनयपूर्वकेण व्यवहारेण, कुशलप्रश्नेन, आसनादिदानेन च सत्कारः विधातव्यः। एवमेव वयसा[१६] कनिष्ठानां[१७], भृत्यानां, क्षुद्रपुरुषाणां च प्रेमालापेन, कुशलप्रश्नेन, आसनप्रदानेन, भोजनपानादिना, सम्मानदर्शनेन च सत्कारः कर्तव्यो भवति।

समष्टिरूपेण अस्माकं देशः अतिथिसत्कारे अतीव प्रसिद्धः अस्ति। तथापि व्यक्तिगतरूपेण बहवः जनाः अतिथीनां सत्कारकरणे नितराम् उदासीनाः भवन्ति। बहवस्तु कस्यापि आगमनस्य समाचारमपि श्रुत्वा दुःखिता भवन्ति। ते व्ययभयात् इतस्ततो निलीयन्ते[१८] अन्यत्र वा गच्छन्ति। ईदृशा जनाः सुखेन मधुरं वचनमपि न वदन्ति। किं पुनः वक्तव्यं भोजनपानादिविषये? परन्तु ईदृशो व्यवहारः अस्माकं कृते धर्मविरुद्धः, संस्कृतिविरुद्धः परम्पराविरुद्धश्च अस्ति। अस्याः पवित्र-परम्परायाः पालनाय सर्वैरपि ध्यानं दातव्यम्।

---

## ४६—संस्कृतप्रचारस्य आवश्यकता

संस्कृतभाषा अस्माकं देशस्य सर्वप्राचीना भाषा अस्ति। सम्प्रति अस्माकं देशे अनेकाः भाषाः प्रचलिताः सन्ति। यथा-हिन्दी, बंगला, मराठी, गुजराती, उड़िया, आसामीप्रभृतयः। आभ्यः पूर्वं पाली-प्राकृताऽपभ्रंशप्रभृतयः भाषाः प्रचलिताः

१६—अस्वथा से। १७—छोटों का। १८—छिप जाते हैं।

आसन्। आसां सर्वासामपि भाषाणां जननी संस्कृतभाषा एव अस्ति। संस्कृतभाषाया एव एतासां भाषाणाम् उत्पत्तिः अस्ति। अतएव इमाः भाषाः संस्कृतस्य पुत्र्यः पौत्र्यः वा निगद्यन्ते। अतएव अद्यापि संस्कृतभाषा जननी इव आसां भाषाणां पालनं पोषणं संवर्द्धनं च कुर्वन्ती अवलोक्यते। एवमेव दक्षिणभारते याः तमिल, तेलगू, कन्नड़, मलयालमप्रभृतयः भाषाः प्रचलन्ति तासामपि संस्कृतेन सह घनिष्ठः सम्बन्धो वर्तते।

अस्माकं भारतीयानां समस्तं साहित्यमपि संस्कृतभाषायामेव वर्तते। वेदाः, उपवेदाः, वेदाङ्गानि, दर्शनशास्त्राणि, धर्मशास्त्रम्, अर्थशास्त्रम्, कामशास्त्रम्, पुराणानि, उपपुराणानि काव्यं नाटकञ्चेत्यादि समस्तमपि विशालं ज्ञान-विज्ञानवैभवं संस्कृतभाषायामेव निबद्धं वर्तते। ब्राह्मणसाहित्यातिरिक्तं जैनधर्मस्य बौद्धधर्मस्य च महत्त्वपूर्णाः ग्रन्थाः संस्कृतभाषायामेव लिखिताः सन्ति।

एवमेव अस्माकं सम्पूर्णः इतिहासः अपि अस्यामेव भाषायां समुपनिबद्धः वर्तते। देवासुराणाम् आख्यानम्, अवताराणां कथा, महापुरुषाणां चरित्राणि, राजनीतिकाः वृत्तान्ताः, वंशोपवंशानां विस्तृतं वर्णनम्, भारतीयानां विदेशेषु गमनं, स्वसंस्कृतेः प्रचारश्चेति सर्वमपि भारतीयम् इतिवृत्तं संस्कृतस्यैव रामायण-महाभारत-पुराण-प्रभृतिषु ग्रन्थेषु समुल्लिखितं वर्तते। संस्कृतम् ऋते भारतीयेतिवृत्तपरिज्ञानाय न अन्यः कोऽपि पन्था विद्यते।

इत्थमेव भारतीयानां धर्म-संस्कृति-सभ्यता-सदाचारादिविषयाणाम् अपि संस्कृतग्रन्थेभ्य एव ज्ञानं लब्धुं शक्यते। न अन्यतः।

एतेन इदं सिद्धं भवति यत् संस्कृतभाषायाः ज्ञानं विना भारतीयानां धर्मः, साहित्यम्, संस्कृतिः, सभ्यता, इतिहासः, कला, ज्ञानं, विज्ञानं, रीतिः, नीतिर्वा किमपि यथार्थरूपेण ज्ञातुं न शक्यते। अनेनैव कारणेन भारतीयजनतायाः कृते संस्कृत-

शिक्षायाः महती आवश्यकता वर्तते। यस्य संस्कृतज्ञानं न भवति तस्य भारतीयतायाः किमपि ज्ञानं न भविष्यति। एतदतिरिक्तं भारतीयराष्ट्रस्य विभिन्नप्रदेशेषु सांस्कृतिकदृष्टया ऐक्यसरक्षाय अपि संस्कृतस्य महती उपयोगिता अस्ति इत्यपि ध्याने रक्षणीयं वर्तते।

अद्यावधि संस्कृतभाषा भारतीयैः उपेक्षिता आसीत्। बहवः इमां मृत - भाषां वदन्ति स्म। परन्तु किं इयं भाषा वस्तुतः उपेक्षणीया वा मृता वा वर्तते? कदापि नहि। इयं दुर्बुद्धिस्तु केवलं दास्यवशात् अस्मासु समागता आसीत्। प्रसन्नतायाः अयं विषयो वर्तते यत् स्वतन्त्रतायां प्राप्तायां दास्यरूपिणा दुष्ट-ग्रहेण निर्मुक्ताः सर्वेऽपि भारतीयाः सम्प्रति संस्कृतप्रचारस्य महत्त्वं उपयोगितां च अङ्गीकुर्वन्ति। भारतस्य कृते इदं शुभलक्षणं वर्तते। यद् राष्ट्रं स्वकीयस्य साहित्यस्य, स्वकीयायाः संस्कृतेश्च संरक्षणं गौरववर्द्धनं च न करोति तद् राष्ट्रं कदापि समुन्नतिं कर्तुं न शक्नोति। इदं सर्वसम्मतं तथ्यं वर्तते। आशास्महे, अनयैव दृष्ट्या भारतराष्ट्रस्य कर्णधाराः तथा सर्वे भारतीया जनाश्च संस्कृतभाषायाः प्रचाराय प्रयत्नं करिष्यन्ति इति।

———

## ४७—नम्रता

विनयः नम्रता कथ्यते। नम्रता एकः मनुष्याणां महान् गुणः अस्ति। येभ्यो गुणेभ्यो मनुष्या महत्त्वं प्राप्नुवन्ति, सर्वत्र आदरं लभन्ते, सर्वेषां प्रीतिभाजनानि[१] च भवन्ति तेषु नम्रतायाः महत्त्वपूर्णं स्थानं वर्तते।

१. प्रेम-पात्र।

येषु पुरुषेषु अयं गुणो भवति तेषाम् उपरि ईश्वरस्य महती कृपा मन्तव्या। नम्रता हि मनुष्याणां भाविनो महत्त्वस्य परिचयं ददाति। ये पुरुषाः यावदेव[२] नम्रा भवन्ति तावदेव[३] समाजे महत्त्वं प्राप्नुवन्ति। विनम्रस्वभावाणां पुरुषाणां उपरि सर्वे जनाः स्नेहं कुर्वन्ति। विनयवन्तो मनुष्याः यत्रैव गच्छन्ति तत्रैव स्वकीयेन विनयपूर्णेन व्यवहारेण सर्वान् वशीकुर्वन्ति। ते कठोरतरम् अपि हृदयं मृदुलतरं कुर्वन्ति, प्रतिकूलान् अपि जनान् अनुकूलान् विदधति, विपक्षिणोऽपि स्वपक्षे आनयन्ति तथा नीरसेऽपि हृदये रसधाराः प्रवाहयन्ति।

नम्रताया विपरीतो यः दोषो वर्तते स उद्दण्डता इति कथ्यते। बहवः जनाः स्वभावतः एव उद्दण्डाः भवन्ति। तेषु नम्रतायाः स्पर्शमात्रमपि न भवति। तेषां गमनं आगमनम्, प्रश्नः उत्तरम्, हासः परिहासः, वार्ता विनोदः, सेवा सत्कारः, भोजनं पानं चेति सर्वमपि कार्यं उद्दण्डतापूर्णं विनयविहीनम् असभ्यतापूर्णं च भवति। एतादृशेषु जनेषु केऽपि जनाः स्नेहं न कुर्वन्ति। एतादृशाः उद्दण्डस्वभावाः जनाः यत्रैव गच्छन्ति तत्रैव अप्रिया भवन्ति। एते आत्मनः स्वभावदोषेण मित्राणि अपि शत्रुतां नयन्ति, अनुकूलान् अपि प्रतिकूलान् कुर्वते, शान्तमपि जनं कुपितं कुर्वन्ति, सुसिद्धमपि कार्यं क्षणमात्रेण नाशयन्ति। उद्दण्डतया कुत्रापि ते सफला न भवन्ति। पदे-पदे च विवदमानाः कलहायमानाश्च नानाविधानि सङ्कटानि आपदश्च आवाहयन्ति[४]।

अयमेव नम्रतायाः उद्दण्डतायाश्च भेदः अस्ति। अतो ये जनाः आत्मनो महत्त्वं समीहन्ते, सर्वत्र सफलतां कामयन्ते, समाजे समादरम् अभिलषन्ति, सर्वेषां च स्नेहभाजनानि भवितुं

---

२–जितने ही। ३–उतने ही। ४–बुलाते हैं।

वाञ्छन्ति तैः उद्दण्डताम् अशिष्टतां[५] च परित्यज्य सर्वैः सह विनयपूर्वको व्यवहारः विधातव्यः[६]। बहवो जनाः आत्मनः विद्यामदेन वा, रूपमदेन वा, धनमदेन वा, कुलमदेन वा, पदमदेन वा मत्ताः सन्तः माननीयैः अपि जनैः सह सम्मानपूर्णं विनयपूर्णं च व्यवहारं न कुर्वन्ति। ते अन्यैः सह विनयपूर्वकं व्यवहारकरणे आत्मनः प्रतिष्ठाया हानिं मन्यन्ते। परन्तु अयं विचारः विवेकपूर्णः नास्ति। विनयेन एव मनुष्याणां प्रतिष्ठाया वृद्धिर्भवति न तु गर्वेण[७]। अतः यस्य यावती[८] अधिका प्रतिष्ठा स्यात् तेन तावान्[९] एव विनयपूर्णः व्यवहारः कर्तव्यः।

**नमन्ति फलिनो वृक्षाः नमन्ति गुणिनो जनाः।**

वर्तमानसमये बालकेषु युवकेषु छात्रेषु च नम्रतायाः अभावो दृश्यते। ते गुरुजनैः सह अपि अविनयपूर्णान् अशिष्टान् च व्यवहारान् कुर्वन्तो[१०] विलोक्यन्ते[११]। परन्तु अयं स्वभावः तेषां कृते हितकरः नास्ति। अतः तैः सर्वैरपि जनैः विशेषतश्च युवकैः आत्मनः एव हिताय औद्धत्यम्[१२] अविनयम् अशिष्टतां च विहाय[१३] लघुभिः सह, समानैः सह, गुरुजनैश्च सह यथासम्भवं विनम्रतया एव व्यवहारः कर्तव्यः।

———

५–असभ्यता। ६–करना चाहिए। ७–घमण्ड से। ८–जितनी। ९–उतना। १०–करते हुए। ११–देखे जाते हैं। १२–उद्दण्डता को। १३–छोड़कर।

## ४८—सदाचार-पालनम्

सत्[1] आचरणं सदाचार इति कथ्यते। गुरुजनानां सेवा, श्रेष्ठजनानां समादरः, सत्यवादिता, सरलता, निष्कपटः व्यवहारः, सत्पुरुषाणां संगतिः, परधने परस्त्रीषु च अस्पृहा, इन्द्रियाणां निग्रहः, शीलं, सुजनता चेत्यादिगुणानां सदाचारे गणना भवति। एतेषां पालनं सदाचारपालनं निगद्यते।

मनुष्यस्य उन्नति—साधकेषु गुणेषु सदाचारस्य सर्वोत्कृष्टं[2] स्थानं वर्तते। ये जनाः गुरुजनान् सेवन्ते, श्रेष्ठजनान् सत्कुर्वन्ति, माननीयान् मानयन्ति, मातुः पितुश्च आज्ञायाः पालनं कुर्वन्ति, सदा सत्यं वदन्ति, परेषां वञ्चनां[3] न कुर्वन्ति, परधनं न समीहन्ते[4], परस्त्रियः न कामयन्ते[5], सत्पुरुषाणां संगतिं कुर्वन्ति, इन्द्रियाणि वशे रक्षन्ति तथा सङ्कटे अपि सन्मार्गं न परित्यजन्ति[6] तेषामेव जीवनं श्रेष्ठं वरिष्ठं सुखमयं शान्तिमयं च भवति। एतादृशानां सदाचारपरायणानां समाजे सर्वत्र समादरः भवति। ते यत्रैव गच्छन्ति तत्रैव सत्कारं पूजां प्रतिष्ठां सर्वोत्तमं च पदं प्राप्नुवन्ति। ईदृशाः पुरुषाः लोके परलोके वा, मित्रगृहे वा, स्वदेशे परदेशे वा सर्वत्र निर्भयाः निरापदश्च विचरन्ति।

इतो विपरीतं ये जनाः सदाचारविरुद्धम् आचरन्ति, गुरुजनानां सेवां न कुर्वन्ति, श्रेष्ठजनानां समादरं न कुर्वन्ति, पित्रोः आज्ञायाः उल्लंघनं कुर्वन्ति, सदा असत्यं वदन्ति, परजनान्

---

१—अच्छा। २—सर्वोत्तम। ३—ठगई। ४-५—चाहते हैं। ६—छोड़ते हैं। ७—आपत्ति-रहित।

वञ्चयन्ति[८], परधने परस्त्रीषु च लोलुपाः[९] भवन्ति, दुर्जनानां सङ्गतिं कुर्वन्ति, कुमार्गे चलन्ति, सन्मार्गं च परित्यजन्ति तेषां जीवनं सर्वथा गर्हितं[१०] अपमानितं सुखशान्ति-रहितं च भवति। ईदृशानां पुरुषाणां न लोके सद्गतिः भवति न परलोके। ते इतोऽपि भ्रष्टा भवन्ति ततोऽपि भ्रष्टा भवन्ति।

महतः दुःखस्य अयं विषयः वर्तते यत् सदाचारप्रधाने अस्माकं देशे सम्प्रति सदाचारपालने महती शिथिलता[११] आगता वर्तते। सर्वत्र दुराचारस्य एव दृश्यं दृश्यते। चौर्यस्य, लुण्ठनस्य, हिंसायाः, वञ्चनायाः, व्यभिचारस्य, भ्रष्टाचारस्य च सर्वत्र साम्राज्यं वर्तते। समाजे सदाचार-संरक्षणार्थं दुराचारस्य च निरोधार्थं[१२] ये ये विभागाः प्रशासनेन[१३] नियतीकृताः सन्ति तत्रापि भ्रष्टाचारस्य न्यूनता[१४] नास्ति। इदमेव कारणं वर्तते यत् साम्प्रतिकः भारतीयसमाजः नितान्तं सङ्कटावस्थायां पतितः वर्तते। सुखं शान्तिर्वा समाजात् सर्वथा दूरं पलायिता[१५] अस्ति। अस्यां परिस्थितौ समाजे सदाचारस्य नियमानां पुनः प्रतिष्ठापनस्य महती आवश्यकता अस्ति। यावत् देशस्य जने जने सदाचारपालनं प्रति गरीयसी[१६] निष्ठा[१७] न भविष्यति तावत् देशस्य केनापि उपायेन वास्तविकी समुन्नतिः न भविष्यति। अतः प्रशासनस्य, सामाजिकपुरुषाणां जननायकानां च इदं सर्वापेक्षया प्रधानं कर्तव्यं वर्तते यत् पुनरपि समाजे सदाचार-प्रतिष्ठापनाय ते यथाशक्ति प्रयत्नं कुर्वन्तु तथा स्वयं च सदाचारान् पालयन्तु इति।

---

८–ठगते हैं। ९–लालची। १०–निन्दित। ११–ढिलाई। १२–रोकने के लिए। १३–सरकार द्वारा। १४–कमी। १५–भगी हुई। १६ गुरुतर। १७–दृढ़ भक्ति, श्रद्धा।

## ४९—स्वच्छता

मलिनतायाः[१] अभावः स्वच्छता इति कथ्यते। इयं च स्वच्छता द्विविधा भवति। एका बाह्य[२]-स्वच्छता, द्वितीया आभ्यन्तर[३]-स्वच्छता। स्थानस्य स्वच्छता, शरीरस्य स्वच्छता, वस्त्रस्य स्वच्छता, कूप-तडागादीनां स्वच्छता तथा अन्येषां व्यावहारिक-वस्तूनां स्वच्छता बाह्यस्वच्छता कथ्यते। मनसि च रागद्वेषादीनां विकाराणाम् अभावः आभ्यन्तर-स्वच्छता कथ्यते।

जीवने स्वच्छतायाः अनेकदृष्टिभिः महती उपयोगिता वर्तते, महती आवश्यकता वर्तते। सर्वप्रथमं स्वास्थ्यरक्षायाः एव कृते स्वच्छतायाः महती आवश्यकता भवति। येषां मनुष्याणां स्थानं शरीरं वस्त्रादिकं वा स्वच्छं न भवति तेषां स्वास्थ्यं कथमपि शोभनं न तिष्ठति। ईदृशाः जनाः प्रायेण स्वास्थ्यहीनाः रोगिणश्च तिष्ठन्ति। एतद्विपरीतं ये जनाः स्वच्छे गृहे निवसन्ति, स्वच्छं शरीरं रक्षन्ति, स्वच्छानि वस्त्राणि धारयन्ति, स्वच्छेषु पात्रेषु भोजनं कुर्वन्ति, स्वच्छं जलं पिबन्ति, स्वच्छानि खाद्य-वस्तूनि भुञ्जते[४] तथा सर्वाणि व्यवहारोपयोगीनि वस्तूनि स्वच्छानि सुपरिष्कृतानि च रक्षन्ति ते प्रायेण सर्वदा नीरोगाः प्रसन्नमानसाश्च तिष्ठन्ति।

सभ्यतायाः अपि दृष्ट्या स्वच्छता नितान्तम् आवश्यकं वस्तु वर्तते। येषां निवासस्थानं स्वच्छं न भवति, येषां शरीरं स्वच्छं न भवति, ये स्वच्छवस्त्राणि न धारयन्ति, तेषां गणना सभ्यसमाजे न जायते। एतादृशानां जनानां समीपे न तु

---

१—गन्दगी का। २—बाहरी। ३—भीतरी। ४—खाते हैं।

सभ्यजना गच्छन्ति न च ते एव सभ्यसमाजे गन्तुं साहसं कुर्वन्ति। एवम्भूताः[५] मलिनाः मलिन-वस्त्रधारिणश्च जनाः सभा-सम्मेलनेभ्यो भयभीताः इव दूरे एव तिष्ठन्ति। परं ये तु स्वच्छशरीराः स्वच्छवस्त्रधारिणश्च जना भवन्ति तेषां सर्वत्र अप्रतिहतः[६] प्रवेशो भवति। ते सर्वत्र सभ्यसमाजे सादरम् आहूयन्ते[७], सादरम् उपवेश्यन्ते[८], तथा सादरं सत्क्रियन्ते।

एतस्या बाह्यस्वच्छतायाः मानसिकप्रसन्नताया उपरि अपि महान् प्रभावो भवति। स्थानं, शरीरं, वस्त्रादिकं वा यदा स्वच्छं समुज्ज्वलं, सुपरिष्कृतं च भवति तदैव मनसि अपि प्रसन्नता भवति।

इमे सर्वे स्वच्छतायाः गुणाः सन्ति, अस्वच्छतायाश्च दोषाः सन्ति। अतः ये नराः नार्यश्च स्वस्थाः भूत्वा जीवितुं समीहन्ते समाजे च समादरं लब्धुं कामयन्ते तैः पूर्णरूपेण बाह्यस्वच्छतायाः आभ्यन्तरस्वच्छतायाश्च उपरि पूर्णरूपेण ध्यानं दातव्यम्।

---

## ५०—परिश्रमः

आलस्यं विहाय निरन्तरं कार्यपरायणता[१] परिश्रमः इति कथ्यते।

मानवजीवनस्य सफलतायै ये ये गुणाः आवश्यकाः भवन्ति तेषु परिश्रमस्य अतीव महत्त्वपूर्णं स्थानं वर्तते। ये मनुष्याः आलस्यं परित्यज्य दिवानिशं[२] परिश्रमं कुर्वन्ति ते एव स्वकीयं जीवनं सफलं कर्तुं शक्नुवन्ति। परिश्रमं विना कस्यापि

५—ऐसे। ६—बिना रोक-टोक का। ७—बुलाये जाते हैं। ८—बैठाये जाते हैं।

१—काम में लगे रहना। २—दिन-रात।

कार्यस्य सिद्धिः न भवितुं शक्नोति। विद्या, बलं, धनं, कीर्तिः वा सर्वम् अपि परिश्रमेण एव लब्धुं शक्यते।

विद्यार्थिनः अपि यदा सम्यक् प्रकारेण परिश्रमं कुर्वन्ति तदैव ते प्रतिवर्षं परीक्षायां समुत्तीर्णाः भवन्ति, सुयोग्याः विद्वांसः भवन्ति, संसारे यशः सम्पत्तिम् प्रतिष्ठां च उपार्जयन्ति तथा आत्मनः जीवनं सफलं कुर्वन्ति। किं बहुना, परिश्रमी मनुष्यः गृहे बहिः वा यत्रैव निवसति तत्रैव सुखपूर्वकं निवसति, सम्मानस्य च भाजनं[३] भवति।

एतद्विपरीतं ये जनाः परिश्रमं न कुर्वन्ति; आलस्येन, शयनेन, यत्र-तत्र वृथा भ्रमणेन, इतस्ततः उपवेशनेन[४], निद्रया, तन्द्रया च समयं यापयन्ति[५] तेषां जीवनं निरर्थकं एव भवति। एतादृशाः जनाः स्वजीवने किमपि लौकिकं पारलौकिकं वा कार्यं साधयितुं न शक्नुवन्ति। न ते विद्वांसः भवन्ति, न धनिकाः भवन्ति, न यशस्विनः भवन्ति, न वा परोपकारिणः एव भवन्ति। एतादृशाः पुरुषार्थहीनाः परिश्रमहीनाः अलसाः जनाः समाजस्य भारभूताः भवन्ति। एते यत्रैव गच्छन्ति ततः एव दूरीक्रियन्ते।

बहवः जनाः पूर्वजैः उपार्जितेन धनेन परिश्रमस्य आवश्यकतां न अनुभवन्ति। परन्तु अयं विचारः उचितः नास्ति। धने विद्यमाने अपि पुरुषैः परिश्रमः कर्तव्यः एव। वस्तुतस्तु यः स्वयं परिश्रमं न करोति तस्य अन्यजनानां परिश्रमेण उपार्जितस्य धनस्य उपभोगे अधिकार एव नास्ति। अन्यच्च, सुखस्य वास्तविकः स्वादः तदैव मिलति यदा मनुष्यः स्वयं परिश्रमं करोति।

परिश्रमकरणेन अन्ये अपि अनेके लाभाः भवन्ति। परिश्रमेण स्वास्थ्यरक्षा भवति, शरीरं बलिष्ठं भवति, शरीरे

३–पात्र। ४–बैठ कर। ५–बिताते हैं।

स्फूर्तिः आयाति, आलस्यं नश्यति, आत्मनिर्भरता आगच्छति तथा आत्मगौरवस्य अनुभूतिः भवति। व्यक्तेः, समाजस्य राष्ट्रस्य च समुन्नतिः परिश्रमाधीना एव अस्ति। यस्मिन् देशे परिश्रमशीलाः जनाः निवसन्ति तस्य एव देशस्य समुन्नतिः भवति।

अतः सर्वैः अपि मनुष्यैः पूर्णरूपेण परिश्रमः कर्तव्यः। सर्वविधायाः समुन्नतेः प्रधानं कारणं परिश्रम एव वर्तते इति कदापि न विस्मर्तव्यम्।

---

## ५१—कर्तव्यपालनम्

यस्य मनुष्यस्य यत् कर्तव्यं वर्तते तस्य समुचितरूपेण पालनमेव कर्तव्यपालनं कथ्यते।

अयं संसारः कर्मभूमिः अस्ति, कर्तव्यभूमिः अस्ति। अस्मिन् संसारे यावन्तो[1] जनाः जन्म गृह्णन्ति तेषां सर्वेषामपि पृथक्-पृथक् कर्तव्यानि भवन्ति। तानि कर्तव्यानि अनेकविधानि भवन्ति। कानिचित् व्यक्तिगतानि, कानिचित् पारिवारिकाणि कानिचित् सामाजिकानि, कानिचित् नित्यानि भवन्ति, कानिचित् नैमित्तिकानि च। जीविकायै अपि कृषिर्वा, वाणिज्यं वा, कला वा, भृतिर्वा[2] इति बहुविधानि कर्माणि कर्तव्यानि भवन्ति। एवं च प्रत्येकं मनुष्यस्य उपरि अनेकविधानां कर्तव्यानां पालनस्य महान् भारो वर्तते। एकोऽपि एवंविधो मनुष्यः न भविष्यति यस्य किमपि कर्तव्यं न स्यात्—यदि तस्य शरीरं बुद्धिर्वा व्यापन्ना[3] नास्ति।

---

१—जितने। २—नौकरी। ३—बिगाड़ी हुई।

एतेषां कर्तव्यानां पालनं मनुष्यस्य व्यक्तिगत-हिताय देश-हिताय च परमावश्यकं कार्यं भवति। ये मनुष्याः स्वकर्तव्यानां समुचितरूपेण पालनं कुर्वन्ति तेषामेव श्रेष्ठपुरुषेषु गणना भवति। ये सत्पुरुषाः परिश्रमपूर्वकं श्रद्धापूर्वकं च स्वकर्तव्यानि पालयन्ति ते न केवलं स्वस्यैव प्रत्युत[४] सम्पूर्णस्यापि समाजस्य देशस्य च हितसाधनं कुर्वन्ति।

यदि जनाः स्वकर्तव्यानां पालनं न कुर्युः[५] तर्हि समाजस्य कापि व्यवस्था सफला भवितुं न अर्हति। कल्पना क्रियताम्— यदि अध्यापकाः सम्यक् न अध्यापयेयुः, यदि विद्यार्थिनः परिश्रमेण न पठेयुः, यदि न्यायाधीशाः समुचितरूपेण न्यायं न कुर्युः, यदि शासकाः समीचीनतया शासनकार्यं न सम्पादयेयुः, यदि कर्मकराः[६] स्वानि स्वानि कर्माणि सम्यक्तया[७] न विदध्युः[८], यदि कृषकाः[९] कृषिकार्यं श्रमेण न कुर्युः तर्हि किं देशस्य एकमपि कार्यं समीचनरूपेण सम्पन्नं भवितुमर्हति ?

देशस्य कृते महतः दुर्भाग्यस्य अयं विषयो वर्तते यत् साम्प्रतिकेषु जनेषु कर्तव्यपालनं प्रति महती शिथिलता समागता वर्तते। केऽपि श्रमेण, सत्यतया, निष्ठया च कार्यं कर्तुं न वाञ्छन्ति[१०]। सर्वेऽपि वञ्चनया[११] एव स्वार्थसाधनं कर्तुं कामयन्ते[१२]। अधिकाराय तु सर्वे एव कलहं कुर्वन्ति परं कर्तव्यपालने कोऽपि ध्यानं न ददाति। इदमेव कारणं वर्तते यत् देशस्य राजकीया अराजकीया वा कापि उन्नतियोजना समुचितरूपेण फलवती न भवति। यावान्[१३] अर्थव्ययः समय-व्ययश्च भवति तावती[१४] कार्यसिद्धिः न भवति।

---

४–बल्कि। ५–करें। ६–मजदूर। ७–अच्छी तरह से। ८–करें। ९–किसान। १०–चाहते हैं। ११–धोखा देकर। १२–चाहते हैं। १३–जितना। १४–उतनी।

वस्तुतः अस्माकं देशस्य समाजस्य च इदं महद् दौर्भाग्यं वर्तते। यावत् सर्वे जनाः स्व-स्व-कर्तव्यस्य पालनं निष्ठापूर्वकं न करिष्यन्ति तावत् न तेषां कल्याणं भविष्यति न देशस्यापि। कर्तव्यपालनमेव आत्मनः देशस्य वा समुन्नतेः मूलमन्त्रः अस्ति।

---

## ५२—देश-सेवा

आत्मनः देशस्य तथा देशवासिनां सेवा देशसेवा इति कथ्यते।

कस्यापि देशस्य निवासिनां कृते स्वस्य देशस्य सेवा एकं परमावश्यकं कर्तव्यं भवति। यस्मिन् देशे मनुष्यः जन्म गृह्णाति, यस्य देशस्य अन्नेन जलेन वायुना च जीवति, तथा यत्रत्यैः[१] साधनैः सुखोपभोगं करोति तस्य देशस्य सेवाकरणं मनुष्यस्य परमः धर्मः अस्ति।

यः मनुष्यः स्वस्य देशस्य सेवां न करोति, स्वस्य देशस्य कृते त्यागं न करोति, स्वस्य देशस्य सुख-दुःखाभ्यां निश्चिन्तः तिष्ठति, स्वस्य देशस्य उन्नतये प्रयत्नं न करोति, तथा अवसरे स्वस्य देशस्य कृते प्राणान् अपि न परित्यजति तस्य मनुष्यस्य जीवनं निरर्थकम् एव मन्तव्यम्। स देशे वृथा जीवति तथा अखिलान् अपि देशवासिनः कलङ्कयति।

अस्मात् विपरीतं ये जनाः स्वस्य देशस्य सेवां कुर्वन्ति, स्वस्य देशस्य कृते त्यागं कुर्वन्ति, स्वस्य देशस्य सुखदुःखयोः चिन्तया चिन्तिताः तिष्ठन्ति, स्वस्य देशस्य उन्नतये प्रयत्नं विदधति[२] तथा अवसरे उपस्थिते सति देशसेवायाः वलिवेदिकायाम् आत्मार्पणं यावत[३] कुर्वन्ति तेषाम् एव जीवनं सफलं भवति। एतादृशानि

१—जहाँ के। २—करते हैं। ३—तक।

पुरुषरत्नानि कस्यापि देशस्य शिरोभूषणानि भवन्ति। अतः सर्वैः अपि देशवासिभिः यथासम्भवं स्वस्वदेशस्य सेवा अवश्यमेव कर्त्तव्या।

देशसेवायाः अनेके प्रकाराः सन्ति। यथा—देशहिताय सञ्चालितेषु आन्दोलनेषु सहयोगप्रदानम्, देशे वर्तमानानां दोषाणां निर्मूलनम्, युद्धकाले देशाय आत्मसमर्पणम्, स्वस्वकर्तव्यानां समुचितरूपेण निष्ठापूर्वकं पालनम्, न्यायस्य रक्षा, उत्कृष्ट-साहित्य-निर्माणम्, शिल्पकलादीनां सम्बर्द्धनम्, देशस्य स्वतन्त्रतायाः सरक्षणम्, देशवासिषु परस्परं सङ्घटनस्य सहकारितायाः शिक्षायाः तथा सदाचारस्य प्रचारश्च। एभिः कार्यैः स्वशक्त्यनुसारं सर्वैः मनुष्यैः देशसेवा कर्तुं शक्यते।

यस्य देशस्य निवासिषु देशसेवायाः उत्कृष्टा भावना भवति ते अल्पेन एव कालेन स्वकीयं देशं समुन्नतेः उन्नततमं शिखरं प्रापयन्ति[४]। संसारस्य इतिहासे एतस्य अनेकानि उदाहरणानि लभ्यन्ते।

सम्प्रति एष कर्तव्यभारः अस्माकं शिरसि आपतितः[५] वर्तते। अयं समयः भारतीयानां देशभक्तेः परीक्षायाः समयः अस्ति। अतः सर्वेषां भारतनिवासिनां जनानाम् इदं परमं कर्तव्यं वर्तते यत् ते अपि उपरि लिखितेन मार्गेण देशसेवां विधाय स्वदेशस्य, स्वदेशवासिनां तथा आत्मनश्च हितं सम्पादयेयुः[६]।

———

## ५३—एकता

मतभेदस्य विरोधस्य वा अभावः एकता इति उच्यते। एकतायाः अपरं नाम "ऐक्यं 'सङ्घटनं" वा इत्यपि वर्तते।

---

४—पहुँचा देते हैं। ५—आ पड़ा। ६—सम्पादन करें।

मनुष्याणां सांसारिक-जीवनस्य कृते एकता महान् लाभकारी गुणः अस्ति। यदि संसारे मनुष्येषु एकता न स्यात् तर्हि तेषाम् एकदिनस्यापि जीवनं कठिनं सम्पद्येत[1]। परिवारस्य एव उदाहरणम् गृह्यताम्। परिवारस्य सर्वासु अपि व्यक्तिषु यदि एकता न स्यात् तर्हि स परिवारः एकमपि दिनं सुखेन निवसितुं न शक्नोति। यस्मिन् परिवारे एकता न भवति, यस्य परिवारस्य सर्वे जनाः पदे पदे विवदन्ते[2], क्षणे क्षणे कलहायन्ते[3] तस्य परिवारस्य कीदृशी दुरवस्था भवति इति वयं प्रतिदिनं प्रत्यक्षीकुर्मः।

यथा परिवारे एकताया आवश्यकता वर्तते तथैव समाजे देशे तथा सम्पूर्णे संसारेऽपि एकताया आवश्यकता वर्तते।

एकतायां महती शक्तिः भवति। यत् कार्यम् एकेन न कर्तुं शक्यते तद् बहूनां सम्मिलितेन समुदायेन सुगमतया एव भवति। एकेन तृणेन किमपि कार्यं भवितुं न शक्नोति परं यदा तेषाम् एव तृणानां समुदायेन रज्जुः[4] निर्मीयते[5] तदा तया गजा अपि बध्यन्ते[6]। एकतायाः बलेन असाध्यमपि सुसाध्यम्, दुर्लभमपि सुलभं, कठिनमपि सरलं तथा दुष्करमपि सुकरं भवति। अत एव नीतिकारैः कथितम्—

**संहतिः[7] कार्यसाधिका।**

येषु एकता भवति ते एव सुखं जीवन्ति, तेषामेव समुन्नतिः भवति, ते एव विकासं प्राप्नुवन्ति, तेषामेव गृहे शान्तिः विराजते, तत्रैव सम्पदः निवसन्ति, तेभ्यः एव शत्रवः बिभ्यति[8], तान् एव जनाः मानयन्ति, ते एव समाजे प्रतिष्ठिता भवन्ति, तेषामेव

---

१—हो जाय। २—विवाद करते हैं। ३—झगड़ते रहते हैं। ४—रस्सी। ५—बनाई जाती है। ६—बाँधे जाते हैं। ७—संघटन, ८—संघशक्ति। ८—डरते हैं।

कार्याणि सिद्ध्यन्ति, तेषामेव मनोरथाः पूर्य्यन्ते, तेषामेव वचः श्रूयते[९] तेषामेव च समाजे प्रभावो भवति। एतद्विपरीतं येषु एकता न भवति तेषां सर्वमपि इतः[१०] विपरीतमेव भवति।

अतः यथासम्भवं सर्वैरपि जनैः परिवारे समाजे देशे तथा विश्वस्मिन् भूमण्डलेऽपि एकतायाः स्थापनाय प्रयत्नो विधेयः येन सम्पूर्णमपि विश्वं सुखशान्तिमयं स्नेहसौहार्दमयं च सम्पद्येत।

वर्तमानसमये एकतायाः महान् अभावः अस्ति। परिवारे समाजे देशे तथा सम्पूर्णे संसारे सर्वत्रैव अनेकतायाः, मतभेदस्य, अविश्वासस्य, वैरविद्वेषादीनां, हिंसायाः प्रतिहिंसायाश्च महाभयंकरो झञ्झावातः[११] प्रवहमानो दृश्यते। एतस्य प्रधानं कारणं तु स्वार्थपरता एव अस्ति। सर्वे स्वकीयमेव हितं पश्यन्ति न अन्येषाम्। अस्यां दशायां कथं नाम एकता सम्भवति[१२]। अतः एकतायाः स्थापनाय परस्परं स्नेह-सौहार्द-वर्द्धनाय च स्वार्थसाधनेन सहैव[१३] परेषामपि स्वार्थ-रक्षणस्य उपरि ध्यानदानं परमावश्यकं वर्तते।

---

## ५४—स्त्री-शिक्षा

मनुष्यसमाजः द्विधा विभक्तः अस्ति—स्त्रीसमाजे पुरुषसमाजे च। स्त्रियः पुरुषाश्च उभये[१] अपि मिलित्वा समाजस्य निर्माणं

९—सुना जाता है। १०—इससे। ११—आँधी। १२—हो सकती हैं। १३—साथ ही।

१—दोनों।

कुर्वन्ति तथा समाजस्य भारं वहन्ति। परन्तु समाजस्य कल्याणं तदा एव भवितुम् अर्हति यदा अयं उभयविधः अपि समाजः शिक्षितः भवति। अत एव समाजस्य हिताय यथा पुरुषसमाजे शिक्षाप्रसारस्य आवश्यकता अस्ति तथैव स्त्रीसमाजे अपि शिक्षा-प्रसारस्य आवश्यकता अस्ति। यदा स्त्रियः पुरुषाश्च उभये अपि साक्षराः शिक्षिताः सुयोग्याश्च भविष्यन्ति तदैव समाजस्य पूर्ण-रूपेण कल्याणं भविष्यति।

वस्तुतस्तु पुरुषसमाजस्य शिक्षाया अपि स्त्रीसमाजस्य शिक्षा विशेषरूपेण आवश्यकी भवति। यतः[२] स्त्रियः एव बाल्यकाले बालानां लालनं पालनं च कुर्वन्ति। मनुष्याणां शैशवं[३] मातॄणाम् एव क्रोडे व्यतीतं भवति। अस्यां अवस्थायां यदि मातरः शिक्षिता भवन्ति तदा ताः शैशवाद् एव स्वशिशून् अपि शिक्षयन्ति। शिक्षिताः मातरः लालन-पालनाभ्यां सहैव स्वबालकान् सदाचारं शिक्षयन्ति, सद्गुणान् उपदिशन्ति, दुर्गुणेभ्यो निवारयन्ति, सन्मार्गे प्रवर्तयन्ति, तथा नानाविधाः शिक्षाप्रदाः कथाः कथयित्वा तेषां हृदयेषु[४] उत्तमोत्तमानां गुणानां बीजानि वपन्ति[६]। एवं प्रकारेण शिक्षितानां महिलानां बालका बालिकाश्च बाल्यकालात् एव शिष्टाः सभ्याः सद्गुणसम्पन्नाश्च भवन्ति। एतादृशा एव बालकाः अग्रे समाजस्य भूषणानि, नेतारः, गौरववर्द्धकाश्च जायन्ते। अतः सभ्यानां सुयोग्यानां नागरिकाणां निर्माणाय स्त्रीशिक्षायाः महती आवश्यकता वर्तते।

अस्माकं देशे स्त्रीसमाजस्य दशा अतीव शोचनीया वर्तते। स्त्रीसमाजे बाहुल्येन अनेके दोषाः सन्ति। अशिक्षा अस्ति, अस्वास्थ्यं अस्ति, अस्वच्छता अस्ति। कुसंस्काराः सन्ति, कुरीतयः

---

२–क्योंकि। ३–बचपन। ४–गोदी में। ५–चलाती हैं। ६–बोती हैं।

सन्ति, कुरूढयश्च सन्ति। ईर्ष्या, द्वेषः, असूया, असहिष्णुता, कलहप्रियता, मूढता, अन्धविश्वासः, गालिप्रदानपटुता, दुराग्रहः, शपथकारिता चेति अनेके दोषाः दुर्गुणाश्च वर्तन्ते। विशेषतश्च ग्रामीणासु महिलासु। इदं सर्वं च अशिक्षायाः एव फलं वर्तते। अतः एतेषां दोषाणां दूरीकरणाय सभ्यमहिलासमाजस्य निर्माणाय च स्त्रीणां शिक्षणं सर्वाधिकं महत्त्वपूर्णं कार्यं वर्तते।

प्रसन्नतायाः अयं विषयः वर्तते यत् सम्प्रति शनैः शनैः स्त्रीशिक्षां प्रति समाजस्य रुचिः वर्द्धमाना[७] विलोक्यते[८]। तथापि बहवः जनाः एतादृशाः अपि सन्ति ये अद्यापि स्त्रीशिक्षायाः उपेक्षां कुर्वन्ति। स्त्रीशिक्षायाः प्रचाराभावे अन्यानि अपि कारणानि सन्ति। अध्यापिकानां न्यूनता अस्ति। कन्यापाठशालानां प्रचुरता नास्ति। सर्वेषां च समीपे बालानां बालिकानां च शिक्षायाः भार-वहनस्य सामर्थ्यं नास्ति। एभिः कारणैः स्त्रीशिक्षायां यादृशी प्रगतिः अपेक्ष्यते तादृशी न अस्ति। अतः शिक्षाधिकारिभिः समाज-हितैषिभिश्च पुरुषैः एतस्मिन् विषये विशेषरूपेण ध्यानं देयम्। एतादृशी च शिक्षापद्धतिः स्त्रीणां कृते निर्मातव्या[१०] यया स्त्रियः आदर्शपत्न्यः आदर्शमातरश्च भवेयुः। भारतीयसंस्कृतेः परिज्ञानाय तथा तदनुकूलाचरणाय च संस्कृतभाषायाः अपि अध्ययनं स्त्रीणां कृते नितान्तम् आवश्यकं वर्तते इत्यपि न विस्मर्तव्यम्।

———

७—बढ़ती हुई। ८—दिखायी देती है। ९—आज भी। १०—बनायी जानी चाहिए।

## ५५—पञ्चायत-व्यवस्था

सम्प्रति भारतीयप्रशासनेन[१] सम्पूर्णे अपि देशे पञ्चायतव्यवस्था विहिता वर्तते। एतस्या उद्देश्यम् अस्ति ग्रामाणां सुशासनं, सुव्यवस्था तथा समुन्नतिः।

अस्माकं देशे ग्रामीणानां एव संख्या अधिका वर्तते परन्तु तेषां दशा समीचीना[२] नास्ति। ग्रामेषु[३] अशिक्षा वर्तते, अस्वास्थ्यं वर्त्तते। अत्याचाराः सन्ति, दुराचाराः सन्ति। दीनता अस्ति, दरिद्रता अस्ति। अकर्मण्यता अस्ति, आलस्यम् अस्ति। अनेके दोषाः सन्ति। यावत् एतेषां दोषाणां निराकरणं न भवति तावत्[४] अस्माकं देशस्य उन्नतिः न भवितुम् अर्हति। अतएव प्रशासन-द्वारा पञ्चायतराज्यस्य व्यवस्था विहिता अस्ति।

साधारणतया यत्र एकसहस्रसंख्यकाः जनाः निवसन्ति तत्र एका ग्रामसभा भवति। एकविंशतिवर्षेभ्यः अन्यूनवयस्काः[५] जनाः ग्रामसभायाः सदस्या भवन्ति। ग्रामसभायाम् एका कार्यकारिणी समितिः भवति या "ग्रामपञ्चायत" इति कथ्यते। प्रत्येकं ग्रामपञ्चायते केचन जनाः निर्णायकाः[६] भवन्ति ये जनसंख्यानुसारं निर्वाचिताः भवन्ति। पञ्चायते हिन्दवः यवनाः[७] वा समानरूपेण सम्मिलिता भवन्ति।

तिस्रः पञ्च वा ग्रामसभाः मिलित्वा पञ्चायतीन्यायालयस्य निर्माणं कुर्वन्ति। अत्रैव निर्णायकैः ग्रामीणविवादानां निर्णयः क्रियते तथा दण्डव्यवस्था च विधीयते।

---

१—भारत सरकार द्वारा। २—अच्छी। ३—जब तक। ४—तबतक। ५—जिनकी कम उम्र न हो। ६—पञ्च। ७—मुसलमान।

ग्रामपञ्चायतानाम् अधिकारे बहूनि कर्तव्यानि सन्ति । शिक्षा-प्रचाराय पाठशालानां पुस्तकालयानां च स्थापनम्, स्वास्थ्यरक्षायै चिकित्सालयानां प्रबन्धः, ग्रामीणानाम् उद्योगशिल्पानां समुन्नयनम्, गमनागमनमार्गाणां सुव्यवस्था, नवनवानां कूपतडागादीनां निर्माणम्, जीर्णशीर्णानां च जीर्णोद्धारः, कृषिवृद्धिकराणां साधनानां संग्रहः, ग्रामरक्षायाः कृते ग्रामसेवकदलस्य निर्माणम् तथा समये-समये सांस्कृतिककार्यक्रमाणाम् आयोजनं च । एतादृशानि बहूनि कार्याणि पञ्चायतानां कृते कर्तव्यानि सन्ति ।

इमानि कार्याणि यदि ग्रामपञ्चायतद्वारा सम्यक् प्रकारेण अनुष्ठितानि स्युः तदा ग्रामाणां वर्तमानदशायां महत् परिवर्तनं भवितुं शक्नोति । ग्रामाणां सर्वाङ्गीण-समुन्नतेः इयं सम्पूर्णा योजनाऽपि तदैव सफला भविष्यति यदा ग्रामपञ्चायतानां सर्वेऽपि अधिकारिणः कार्यकर्तारश्च सुयोग्याः, श्रमशीलाः, कष्टसहिष्णवः, जनहितैषिणः, पक्षपातरहिताः, न्यायप्रियाः, सत्यवादिनः तथा लोभरहिताश्च भविष्यति ।

---

## ५६—चल-चित्रम्

आधुनिकविज्ञानेन सम्प्रति बहूनि विस्मयकराणि वस्तूनि आविष्कृतानि सन्ति । तेषु एकं महत्त्वपूर्णं वस्तु चलचित्रपटम् अपि वर्तते । चलचित्रपटम् आङ्गलभाषायां सिनेमा (Cinema) इति कथ्यते ।

चलचित्रपटे एकं विस्तृतं शुक्लवर्णं वस्त्रं भवति । तस्मिन् एव वस्त्रे यन्त्रद्वारा चित्राणि प्रतिबिम्बितानि क्रियन्ते । तानि चित्राणि पूर्वं स्थिराणि भवन्ति । परन्तु यदा चित्रपटे प्रतिबिम्बि-

तानि विधीयन्ते तदा यन्त्रसहाय्येन तानि चलानि भवन्ति। अत एव एतस्य नाम चलचित्रपटं इति वर्तते।

पूर्वं इमानि चित्राणि केवलं चलानि एव आसन् परन्तु सम्प्रति तानि शब्दोच्चारणम् अपि कुर्वन्ति। अतः इदानीं इदं सवाक् चलचित्रपटं अपि कथ्यते। साम्प्रतिकेषु चलचित्रपटेषु यानि चित्राणि प्रतिबिम्बितानि भवन्ति तानि हसन्ति, विलपन्ति, गायन्ति, नृत्यन्ति, चुम्बन्ति, आलिङ्गन्ति, वदन्ति, आलपन्ति, एवं सर्वाणि शारीरिकाणि वाचिकानि च कर्माणि कुर्वन्ति। एवमेव पशवः तथा पक्षिणः अपि धावन्तः उड्डीयमानाः शब्दायमानाश्च दृष्टिपथं आयान्ति।

देशे विदेशे च सम्प्रति चलचित्रपटानां महान् प्रचारः वर्तते। एकैकस्मिन् नगरे पञ्च-पञ्च सप्त-सप्त दश-दश चलचित्रपटानि चलन्ति। साधारणे नगरेऽपि द्वित्राणि चलन्ति[1] दृश्यन्ते। प्रतिदिनं अस्य प्रचारः वर्द्धमानः एव दृश्यते।

एतेषां चलचित्रपटानां प्रचारेण सम्प्रति समाजस्य महान् लाभो वर्तते। सर्वप्रथमं तु मनोविनोदस्य इदं सुमहत् साधनम् अस्ति। एतस्य सरस - मधुराणां गीतानां श्रवणेन, मनोहराणां दृश्याणां दर्शनेन, चित्ताकर्षकाणां चित्राणाम् अवलोकनेन, कौतूहलवर्द्धकानां कथोपकथनानाम् आकर्णनेन[2] च दर्शकानां महान् आनन्दः जायते।

एतदतिरिक्तं ज्ञानविस्तारे अपि एतस्य महती उपयोगिता वर्तते। कृषिः, उद्योगः, शिल्पं, स्वास्थ्यम्, विज्ञानम्, चिकित्सा, पशुपालनम्, गृहव्यवस्था, शिक्षा चेति नानाविधानां उपयोगिनां ज्ञातव्यविषयाणां तथा विभिन्नदेश-जातानां दर्शनीयवस्तूनाम् अपि व्यापके ज्ञाने चलचित्रपटानि बहु उपकारीणि भवन्ति।

---

१–चलते हुए। २–सुनने से।

समाजसुधारस्य अपि इदमेकं महत् साधनं वर्तते। समाजे परम्परागताः अनेके दोषाः वर्तन्ते। तेषां निवारणस्य महती आवश्यकता अस्ति। एतस्मिन् विषये अपि चलचित्रपटेभ्यः महती सहायता लभ्यते। समये-समये एषु समाजसुधारसम्बन्धीनि अपि अनेकानि एतादृशानि दृश्यानि आगच्छन्ति येषां दर्शनेन दर्शकानां हृदये समाजसुधारस्य भावना जागर्ति।

इमे सर्वे चलचित्रपटैः जायमानाः लाभाः सन्ति। परन्तु अनेन समाजस्य एका महती हानिः अपि अस्ति। एषु चित्रपटेषु अनेकानि एतादृशानि अपि दृश्यानि आगच्छन्ति यानि सर्वथा अश्लीलानि, असभ्यतापूर्णानि, भारतीयसंस्कृति-विरुद्धानि च भवन्ति। एषु दृश्येषु अर्धनग्नाः नार्यः प्रदर्श्यन्ते[३], अश्लीलानि गीतानि गीयन्ते, अश्लीलप्रायाश्च चेष्टाः विधीयन्ते। सर्वेषां समक्षं[४] चुम्बनालिङ्गनादीनि कामोत्तेजकानि कार्याणि क्रियन्ते। एतादृशानां दृश्यानां दर्शनेन दर्शकेषु, विशेषतश्च नवयुवतीषु, बालकेषु बालिकासु च कीदृशाः भावाः जागरिष्यन्ति इति सर्वे एव ज्ञातुं शक्नुवन्ति। समाजे सम्प्रति सर्वत्र प्रतिदिनं या चरित्रहीनता वर्द्धमाना दृश्यते तत्र इमानि चलचित्रपटानि अपि प्रधानकारणानि सन्ति।

अतः यावत् अस्य महतः दोषस्य निराकरणं न भवति तावत् चलचित्रपटेभ्यः लाभापेक्षया हानिः एव अधिका मंस्यते[५]। चलचित्रपटं खलु एकं एतादृशं तीक्ष्णं विषं वर्तते यत् देशस्य भाविनां नागरिकाणां मनांसि बाल्यकालतः एव दूषितानि करोति। अतः प्रशासनद्वारा सामाजिकसंस्थाभिश्च अस्य शीघ्रातिशीघ्रं निराकरणाय[६] प्रयत्नः कर्तव्यः।

---

३–दिखाई जाती है। ४–सामने। ५–मानी जायगी। ६–दूर करने के लिए।

## ५७–पुरस्कार-वितरणम्

प्रायः सर्वेषु विद्यालयेषु वर्षस्य अन्ते एकः वार्षिकोत्सवः भवति। तस्मिन् उत्सवे ये छात्राः पठने लेखने, वादे विवादे, खेलने कूर्दने, स्वास्थ्ये सदाचारे च सर्वश्रेष्ठाः भवन्ति तेभ्यः विद्यालयद्वारा पुरस्काराः प्रदीयन्ते[1]। इदम् एव कार्यं पुरस्कार-वितरणं पारितोषिकवितरणं वा कथ्यते।

पुरस्काररूपेण नानाविधानि वस्तूनि दीयन्ते। साधारणेषु विद्यालयेषु प्रायेण पुस्तकानि, लेखन्यः[2], मसीपात्राणि[3] च पुरस्कारे प्रदीयन्ते। महत्सु विद्यालयेषु पुस्तकाद्यतिरिक्तं रजतमयानि[4] सुवर्ण-मयानि[5] च पदकानि अपि वितीर्यन्ते[6]। क्वचित् क्वचित् रूप्यकाणाम् अपि पुरस्काररूपेण प्रदानं भवति।

वर्षान्ते यः वार्षिकोत्सवः भवति तत्र एका सभा भवति। तस्यां सभायां यः सभापतिः भवति स एव पुरस्कारप्रदानं करोति। विद्यालयस्य कश्चित् कर्मचारी पुरस्कारप्रदानाय निर्वाचितानां[7] विद्यार्थिनां एकैकशः[8] नाम पठति। ततः सभापतिः तेभ्यः पुरस्कारान् प्रददाति। कर्मचारी यस्य छात्रस्य नाम गृह्णाति स छात्रः विनयपूर्वकं सभापतेः सम्मुखं[9] गच्छति, तस्मै सविनयं प्रणमति तथा पुरस्कारं च गृहीत्वा पुनः प्रसन्नमानसः स्वस्थानं गत्वा उपविशति। क्वचित् पुरस्कार-प्रदानान्तरं

---

१–दिये जाते हैं। २–कलम। ३–दावात। ४–चाँदी के। ५–सोने के। ६–दिये जाते हैं। ७–चुने हुए। ८–एक-एक करके। ९–सामने।

तत्रत्याः सभासदः तालिका[१०] अपि वादयन्ति[११]। अनन्तरं सभापतेः भाषणस्य पश्चात् सभा विसर्जिता भवति।

पुरस्कारप्रदानस्य प्रथा छात्राणाम् उत्साहवर्धनस्य दृष्ट्या अतीव लाभकारिणी अस्ति। बहवः छात्राः पुरस्कारप्राप्तेः आशया परिश्रमपूर्वकं पठन्ति तथा प्रथमश्रेण्याः लाभाय प्रयत्नं कुर्वन्ति। अनेके छात्राः वादविवादप्रतियोगितायां, खेलने कूर्दने वा पुरस्कारप्राप्तये एव कठोरं परिश्रमं कुर्वन्ति अहोरात्रं[१२] च तन्मयाः भूत्वा तस्य अभ्यासं विदधति।

यदा छात्राः पुरस्कारं लभन्ते[१३] तदा तेषां मनसि महती प्रसन्नता जायते, मुखमण्डलं प्रफुल्लितं भवति, तेषां गुरुजनाः सुहृदः, सहपाठिनः, बन्धुबान्धवाश्च अभिनन्दनं कुर्वन्ति। सर्वे च तत्रत्याः जनाः तं छात्रं समादरदृष्ट्या अवलोकयन्ति। एभिः कारणैः पुरस्कारप्रापकाणां[१४] छात्राणाम् उत्साहः द्विगुणितः जायते। ते पुनरपि तथैव परिश्रमं कर्तुं प्रारभन्ते। तेषां सर्वत्र सम्मानं दृष्ट्वा अन्येषाम् अपि छात्राणां हृदये तथैव परिश्रमं कर्तुं प्रेरणा जायते।

परन्तु क्वचित् क्वचित् पुरस्कारदातृभिः पुरस्कारप्रदाने अनुचितः पक्षपातः अपि विधीयते। तेन अयोग्याः छात्राः पुरस्कारं लभन्ते योग्याश्च पुरस्कारप्राप्त्या वञ्चिताः भवन्ति। एतेन योग्यानां छात्राणां उत्साहभङ्गो जायते मध्यस्थाश्च पक्षपातदोषेण कलङ्किताः भवन्ति। अतः पुरस्कारप्रदाने यथा पक्षपातः न स्यात् तथा मध्यस्थैः प्रयत्नः कर्तव्यः।

———

१०–तालियों। ११–बजाते हैं। १२–दिन रात। १३–पाते हैं। १४–पाने वाले।

## ५८-वैज्ञानिका आविष्काराः

विश्ववाङ्मये अनेकानि शास्त्राणि सन्ति तेषु एकं विज्ञान शास्त्रमपि वर्तते। अस्य शास्त्रस्य मुख्यं प्रयोजनं सर्वेषामपि भौतिकपदार्थानां अध्ययनम्, तत्त्वान्वेषणं तथा तेषां लोकहित-कार्येषु नियोजनं च वर्तते। सम्प्रति एतस्य शास्त्रस्य प्राचीन-कालापेक्षया महती आश्चर्यमयी च समुन्नतिः जाता वर्तते।

अस्य शास्त्रस्य पारङ्गतैः पण्डितैः ये ये अनेके नवीना वैज्ञानिका आविष्काराः आविष्कृताः सन्ति ते एव वैज्ञानिका आविष्काराः उच्यन्ते। तेषु केचन मुख्यतमाः इमे सन्ति—यथा वैद्युतशक्तेः[१] उत्पादनम्, तद्द्वारा नानाविधानां कार्याणां साधनम्, मुद्रण-यन्त्राणि[२], सवाक् चित्रपटम्[३], ध्वनिप्रसारकं यन्त्रम्[४], विविधानि विमानानि, साइकिल - मोटर - रेलवे - प्रभृतीनि नानाविधानि यानसाधनानि, अणुबम् प्रभृतीनि महान्ति युद्धसाधनानि तथा अनेकानि कृषिसाधनानि च।

एतेषां आविष्काराणां कारणेन मनुष्याणां जीवने महती सरलता, महत् सौविध्यं च समागतं वर्तते। गमने आगमने, भोजने पाने, क्रीडायां कौतुके, खेलने कूर्दने, पठने लेखने, व्यवसाये वाणिज्ये, किमधिकं जीवनस्य सर्वेष्वपि क्षेत्रेषु यद्वयं सुखं सौविध्यं च अनुभवामः तत्र विज्ञानशास्त्रमेव प्रमुखं कारणं वर्तते। विज्ञानबलेनैव सम्प्रति अगम्यमपि सुगमम्, असाध्यमपि सुसाध्यम्, दुर्लभमपि सुलभम्, दुष्करमपि सुकरम्, अदृश्यमपि

---

१—बिजली का। २—छपाई के मशीन। ३—बोलता सिनेमा। ४—लाउड स्पीकर।

सुदृश्यम्, दुष्प्रवेश्यमपि सुप्रवेश्यम्, दुरारोहमपि[५] सुखारोहम्, दुःश्रव्यमपि सुश्रव्यम्[६], दुर्बोधमपि सुबोधं तथा असम्भवमपि सम्भवं सम्वृत्तं वर्तते। एवं च वैज्ञानिकसमुन्नत्या संसारस्य महान् लाभो वर्तते, अगणनीयाः उपकाराः सन्ति। विषये अस्मिन् विशेषलेखनस्य आवश्यकता नास्ति। इदं सर्वं वयं प्रत्यक्षमेव अनुभवामः।

परन्तु यथा विज्ञानशास्त्रस्य समुन्नत्या तदीयैः आविष्कारैश्च अस्माकं अनेके उपकाराः लाभाश्च सञ्जाताः सन्ति तथैव अस्माकं समाजस्य अनेका हानयः अपि सम्वृत्ता वर्तन्ते। यथा–विध्वंसकानां अस्त्रशस्त्राणां आविष्कारेण जनसंहारः, नानाविधानां विलास-वस्तूनां निर्माणेन विलासिताया अभिवृद्धिः, महासहायन्त्राणाम् निर्माणेन लघूनां कुटीरशिल्पानां विनाशः, कृत्रिमरूपेण गर्भ-स्थापनादिना अनैतिकतायाः प्रसारश्चेत्यादि। यदि इमे समाज-हानिकरा दोषा न स्युः तदा वैज्ञानिकी समुन्नतिः विश्वस्य कृते भगवतः वरदानरूपा भवितुर्हति इत्यत्र नास्ति सन्देहावसरः।

अस्मिन्नेव विगते सप्ताहे विश्वप्रसिद्धस्य वैज्ञानिशिरोमणेः श्रीअल्वर्ट आइन्स्टीन महोदयस्य मृत्युः जाता। मृत्योः त्रिचतुराणि दिनानि एव पूर्वं भारतोय - प्रधानमन्त्रिणः श्रीनेहरूमहोदयस्य विश्वशान्तिस्थापनायै क्रियमाणस्य प्रयत्नस्य प्रशंसां कुर्वता आइन्स्टीनमहोदयेन कथितं यत् वैज्ञानिकानां आविष्काराणाम् शान्तिकार्येषु एव प्रयोगः कर्तव्यः न विध्वसात्मकेषु कार्येषु। यदि सर्वेऽपि वैज्ञानिकाः आइन्स्टीन महोदय इव शान्तिस्थापनपक्षे स्वमतं दद्युः तर्हि वैज्ञानिकैः आविष्कारैः निःसंशयं महान् लाभः भविष्यति।

———

५–कठिनाई से चढ़ने योग्य। ६–कठिनाई से सुनने योग्य।

## ५६—ग्रामोन्नतिः

अस्माकं देशः ग्रामप्रधानदेशः अस्ति। अस्मिन् देशे नगराणाम् अपेक्षया ग्रामाणां संख्या अधिका वर्तते। देशस्य सर्वाधिका जनता ग्रामेषु एव निवसति। अतः इदं निश्चितं वर्तते यत् यावत् ग्रामाणां समुन्नतिः न भविष्यति तावत् भारतस्य उन्नतिर्न भवितुमर्हति। अतएव ग्रामोन्नतिविषये ध्यानदानस्य सम्प्रति महती आवश्यकता वर्तते।

दुःखस्य अयं विषयः वर्तते यत् अस्माकं ग्रामाणां वर्तमानदशा अतीव शोचनीया वर्तते। एतस्य इदं एव प्रधानं कारणं वर्तते यत् उन्नतये यानि साधनानि आवश्यकानि भवन्ति तेषां साधनानां ग्रामेषु नितान्तम् अभावः अस्ति। शिक्षायाः कृते समीचीनः प्रबन्धः नास्ति। पुस्तकालयानाम् अभावः अस्ति। व्यायामशालायाः तु नाम अपि बहवः जनाः न जानन्ति। स्वच्छतायाः उपरि ध्यानं नास्ति। औषधालयाः दूरे दूरे सन्ति। गृहशिल्पानां विकासस्य कृते काचन सुविधा नास्ति। मार्गाः त्रुटिताः स्फुटिताः विषमाः सङ्कीर्णाः च वर्तन्ते। नवाविष्कृतानां कृषिसाधनानां सुलभता नास्ति। तथा भूमिविषये सम्पत्तिविषये च महती विषमता वर्तते। इमानि एव कारणानि सन्ति येन ग्रामेषु अशिक्षायाः, कुसंस्काराणां, अस्वास्थ्यस्य, अस्वच्छतायाः, दरिद्रतायाः तथा दुःखस्य च सर्वत्र साम्राज्यं वर्तते।

एतदतिरिक्तं गोवंशस्य ह्रासः, शिक्षितानां श्रमकर्मणि उदासीनता, ग्रामीणेषु सहकारितायाः अभावः, परस्परम् ईर्ष्याद्वेषादीनां बहुलता, भाग्यवादस्य अवलम्बनम्, उत्साहसम्पत्तेः

अभावः, सांस्कृतिकचेतनायाः शून्यता, विवाहादिषु संस्कारेषु अनावश्यकः व्ययः, मादकद्रव्याणां सेवनम्, अकर्मण्यता चेति दोषाः अपि ग्रामाणाम् अवनतेः प्रमुखानि कारणानि सन्ति। इमानि च कारणानि न केवलं ग्रामाणाम् एव प्रत्युत परम्परया सम्पूर्णस्य अपि देशस्य समुन्नतौ महान्ति बाधकानि सन्ति।

अस्यां स्थितौ ग्रामोन्नतिविषये ध्यानदानस्य कियती आवश्यकता वर्तते इति विषये विशेषकथनस्य किमपि प्रयोजनं नास्ति।

यद्यपि ग्रामाणां समुन्नतये वर्तमानप्रशासनं, सर्वोदयसमाजः तथा अन्यानि राजनीतिकदलानि च महान्तं प्रयत्नं कुर्वाणानि दृश्यन्ते। ग्रामपञ्चायतेभ्यः अपि ग्रामसुधारस्य प्रशासनेन महान् कार्यभारः प्रदत्तः अस्ति। तथापि अधिकारिषु, समाजसेवकेषु जनतायां च सत्यनिष्ठायाः, सेवाभावस्य, निःस्वार्थतायाः, पारस्परिक-सहयोगस्य च अभावेन कापि योजना सम्यक् प्रकारेण सफलीभूता न भवति। यावत् राजकीयाः अधिकारिणः, सामाजिकाः पुरुषाः, राजनीतिकदलानां नेतारः, ग्रामीणाः जनाः च निष्ठया, उत्साहेन, परस्परं सहयोगेन, परिश्रमेण, निःस्वार्थभावेन च मिलित्वा कार्यं न करिष्यन्ति तावत् ग्रामोन्नतेः सर्वम् अपि कल्पितं सुन्दरं दृश्यं योजनापुस्तकेषु एव स्थितं स्थास्यति।

# व्याख्यान पद्धति

इस पुस्तक में विभिन्न शिक्षाप्रद विषयों पर जो निबन्ध लिखे गये हैं उन्हें व्यख्यान के रूप में भी कहने का अभ्यास छात्रों को करना चाहिए। व्याख्यान आरम्भ करने के पूर्व निम्नलिखित वाक्यों द्वारा सभापति आदि का सम्बोधन तथा जिस विषयपर व्याख्यान देना हो उसकी चर्चा कर देनी चाहिए।

( १ )

**माननीयाः अध्यक्षमहोदयाः !**

**आदरणीयाः सभासदः ! प्रेयांसः छात्रबन्धवश्च !**

सम्प्रति अहं संस्कृतप्रचारविषये श्रीमतां पुरस्तात् किञ्चिद् वक्तुमिच्छामि। आशासे, श्रीमन्तः मदीयं भाषणं ध्यानपूर्वकं श्रुत्वा मम उत्साहं वर्धयिष्यन्ति।

( २ )

**मान्याः अध्यक्षमहोदयाः, पूज्या गुरुजनाः,**

**प्रियाः भ्रातरः, भगिन्यश्च !**

साम्प्रतमहं सभासंयोजकमहोदयानां आदेशात् संस्कृतभाषायाः महत्त्वविषये किञ्चिद्वक्तुं कामये। आशां करोमि, भवन्तः मदीय-त्रुटीनां उपरि ध्यानं न दत्त्वा प्रेमपूर्वकं भाषणं श्रोष्यन्ति तथा मम उत्साहं वर्धयिष्यन्ति।

( ३ )

**परमसम्माननीयाः सभापतिमहोदयाः,**

**पूजनीया विद्वांसः, आदरणीयाः बन्धुजनाश्च !**

यद्यपि संस्कृतभाषायाः मम समुचितं ज्ञानं नास्ति तथापि ...तावितं विषयमवलम्ब्य यथाशक्ति स्वकीयान् विचारान् प्रकटी-...तुमिच्छामि। मदीये भाषणे याः काश्चन त्रुटयो भविष्यन्ति ...सां कृते अहं भवतः क्षमादानाय अभ्यर्थये।

( अधिक जानकारी के लिए संस्कृत निबन्धादर्श देखें )

